# अथ श्रीनागोजीभट्टकृतव्याख्यासहिता दुर्गासप्तशती प्रारभ्यते

अत्र च सटीकांगषट्कं सभाष्यं देवीसूक्तं रात्रिसूक्तं च निवेशितमस्माभिः ।



श्रीगणेशाय नमः ॥ श्रीमहाकाल्यै नमः ॥ श्रीमहालक्ष्म्यै नमः ॥ श्रीमहासरस्वत्यै नमः ॥ मार्कंडेयेन क्रोष्टुकिं भागुरिं प्रति उक्तं स्तोत्रं जैमिनिं प्रति पक्षिरूपैर्मुनिपुत्रैरुक्तं मार्कंडेयपुराणे तद्यथामति व्याचक्ष्महे । तत्रादौ व्याख्यास्यमानस्तोत्रे स्तूयमानदेवतास्वरूपं प्राधानिकरहस्याख्ये ग्रन्थविशेषे उक्तं विविच्य दर्श्यते । तत्रादौ राज्ञः प्रश्नः । " भगवन्नवतारा मे चण्डिकायास्त्वयोदिताः । एतेषां प्रकृतिं ब्रह्मन्प्रधानं वक्तुमर्हसि ॥ " इति । अत्रैतेषामिति निर्धारणे षष्ठी । प्रकृतिं मूलकारणं तत्रोत्तरं लक्ष्यस्वरूपमाह । " मातुलिंगं गदां खेटं पानपात्रं च बिभ्रती । नागं लिंगं च योनिं च बिभ्रती नृप मूर्धनि । तप्तकांचनवर्णाभा तप्तकांचनभूषणा ॥ " इति । अलक्ष्यस्वरूपमाह । " शून्यं तदखिलं स्वेन पूरयामास तेजसा । " इति । " लिंगं योनिं च बिभ्रती " इत्यनेनास्याः पुंरूपत्वं स्त्रीरूपत्वं च ध्वनितम् । एतदेव रूपं शैवाः सदाशिव इत्याहुः । वैष्णवाः वासुदेव इति । शाक्ताः महालक्ष्मीरिति । इयं महालक्ष्मीः कूटस्था प्रथममध्यमोत्तरचरित्रत्रयदेवता समष्टिरूपा सकलदेवीमाहात्म्ये देवतेति बोध्यम् । एषा शैवी वैष्णवी च । " सदा शिवांकमारूढा शक्तिरिच्छाह्वया शिवा । महालक्ष्मीरिति ख्याता देवी सर्वगुणान्विता ॥ " इति शिवपुराणात् । लक्ष्मीतंत्रे विष्णुशक्तिरूपया लक्ष्म्या शक्रं प्रति काल्यादीनां स्वावतारभेदत्वोक्तेश्च । एतच्च सार्वात्म्ये पर्यवस्यति । "मायाविशिष्टं शुद्धं ब्रह्मेदं प्रधानतत्त्वस्थम् ।" ततो गुणत्रयविभागेनाह । " शून्यं तदखिलं लोकं विलोक्य परमेश्वरी । बभार रूपमपरं तमसा केवलेन हि ॥ " अत्र तमसः प्राधान्यमाश्रित्य केवलेनेत्युक्तिः । तद्रूपमाह । " सा भिन्नांजनसंकाशा दंष्ट्रांकितवरानना । विशाललोचना नारी बभूव तनुमध्यमा ॥ खड्गपात्रशिरःखेटैरलंकृतचतुर्भुजा । कबंधहारमुरसा बिभ्राणा हि शिरःस्रजम् ॥ " अस्याः रूपेण तामसत्वमुक्त्वा तदेव मोहजनकत्वोपपत्तये ज्ञानकलपाल्पत्वप्रदर्शनेनैव द्रढयति । " सा प्रोवाच महालक्ष्मीं तामसी प्रमदोत्तमा । नाम कर्म च मे मातर्देहि तुभ्यं नमो नमः ॥ " इति । अत एव महालक्ष्मीरपरं रूपं बभारेत्यनेनाविरोधः । अनेन हि मूलशक्तेरस्याश्च भेदो ध्वन्यते । ततो महालक्ष्मीराह । " महामाया महाकाली महामारी क्षुधा तृषा । निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया । इमानि तव नामानि प्रतिपाद्यानि कर्मभिः ॥ " इति । इमां रुद्रेत्यन्ये व्यवहरंति । ततः " तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरं नृप । सत्वाख्येनातिशुद्धेन गुणेनेंदुप्रभं दधौ ॥ अक्षमालांकुशधरा वीणापुस्तकधारिणी । सा बभूव वरा नारी नामान्यस्यैव सा ददौ ॥ " अस्याः सत्त्वप्रधानत्वं दर्शयितुं ज्ञानकलातिरोभावाभावो नामादिप्रश्नाभावेन दर्शितः । " महामाया महावाणी भारती वाक्सर-

स्वती । आर्या ब्राह्मी कामधेनुर्वेदगर्भा च धीश्वरी ॥ " इति । इमां विष्णुरित्यन्ये । श्वेतरूपधरत्वेनापि विष्णोः स्मरणात् । अत्र तमःसत्त्वयोः प्रविभागोक्त्या महालक्ष्मीरेव स्वयं रजःप्राधान्येन स्थितेत्युक्तं भवति । इमां ब्रह्मेत्यन्ये । अलक्ष्यरूपं च सर्वमूलं चतुर्थं वेदितव्यम् । आसां च मूलशक्त्या अभेद उक्त एव । परस्परमपि " तदभिन्नाभिन्नस्य तदभिन्नत्वम् " इति न्यायेन बोध्यम् । स्वस्वरूपांशेनावृतज्ञानत्वादासां तदभेदज्ञानमपि । एतास्तिस्रोऽपि कन्या एव । तत्समानकक्षपुरुषांतरानुक्तेः सर्वासां पुंस्त्र्युभयरूपता च । " अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम् । युवां जनयतां देव्यौ मिथुने स्वानुरूपतः ॥ " इमा आज्ञादानं संमतिरूपं बोद्धव्यम् । " इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम् । हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ ॥ ब्रह्मन्विधे विरिंचेति धातरित्याह तं नरम् । श्रीः पद्मे कमले लक्ष्मीत्याह माता च तां स्त्रियम् ॥ " अत्र मातृत्वं ततः प्रादुर्भावमात्रेण । " महाकाली भारती च मिथुने सृजतः सह । नीलकंठं रक्तबाहुं श्वेतांगं चंद्रशेखरम् ॥ जनयामास नामानि तयोरपि वदामि ते । विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः ॥ उमा गौरी सती चंडी सुन्दरी सुभगा शुभा । एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे ॥ " पुरुषत्वमपीत्यर्थः । एताश्च न सर्ववेद्याः तत्क्रिया च न सर्ववेद्येत्याह । " चक्षुष्मंतो हि पश्यंति पश्यंति ज्ञानचक्षुषः ।" इति । तत्र " ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृप त्रयीम् । रुद्राय गौरीं वरदां वासुदेवाय च श्रियम् ॥ " तत्र स्वस्वपत्न्या सहितास्ते क्रमेण ब्रह्मा सृष्ट्यधिकारं विष्णुः पालनाधिकारं रुद्रः संहाराधिकारं कृतवानित्यग्रे उक्तम् । इयं त्रयी महाकालीजन्यत्वात् कर्मतः तमोमयी । सितां स्त्रियमित्युक्ते रूपतः सत्त्वमयी । एवं च तमःसत्त्वयोस्तस्यां साम्यम् । ब्रह्मा च महालक्ष्मीजन्यत्वात् हिरण्यगर्भ इत्युक्तेः स्वरूपतः । कर्मतश्च रजोमय इति । तत्र रजोद्वैगुण्यम् । विष्णुः सरस्वतीजन्यत्वात् सात्विकः कर्मतः । कृष्णं च पुरुषमित्युक्तेः रूपतस्तमोमय इति । तत्र सत्त्वतमसोः समता । लक्ष्मीस्तु ब्रह्मवद्विगुणरजोगुणा । रुद्रो महाकालीजन्यत्वात् कर्मतस्तमोमयः । श्वेतांगमित्युक्ते रूपतः सत्त्वमय इति । तत्र सत्त्वतमसोः साम्यम् । गौरी तु सरस्वतीजन्यत्वात् गौरीमित्युक्तेश्च कर्मतो रूपतश्च सत्त्वमयीति सत्त्वद्वैगुण्यम् । अत एव तत्तद्गुणानुरूपस्रष्टृत्वादि कर्म तेषाम् । एवं च ब्रह्मविष्ण्वोः स्त्रीपुंमिथुनं मिलित्वा गुणत्रयमपि । शिवमिथुने तु सत्त्वं त्रिगुणम् । एकगुणं तमः रजसः सर्वथाभाव इति तत्त्वम् । एते प्रथमा ब्रह्मादयः । तदग्र एव ब्रह्मणो विष्णुरिति विष्णुधारा । रुद्राद्रुद्रस्तस्मात्पुना रुद्र इति रुद्रधारा । काल्याः सरस्वती सरस्वत्याश्च कालीति काळीधारा । सरस्वत्याः कालि-

कातः सरस्वतीति सरस्वतीधारा । लक्ष्म्याः लक्ष्मीः ततो लक्ष्मीरिति लक्ष्मीधारा । सर्वत्रापि गौरीकेशवौ लक्ष्मीब्रह्माणौ सरस्वतीशंकरौ चेति सहजौ । सर्वत्र ब्रह्मणः सरस्वती विष्णोर्लक्ष्मीः शिवस्य गौरी पत्नीत्यौत्सर्गिकी रीतिः । सर्वेषां रूपकर्माणि मूलवदेव । कदाचित्कल्पभेदेन स्थानभेदेन वा लक्ष्मीतः कालीसरस्वत्यौ सरस्वत्याः सकाशादितरे काल्याः सकाशादितरे विष्णोर्ब्रह्मरुद्रौ ब्रह्मणो रुद्रविष्णू रुद्रात् ब्रह्मविष्णू इत्यपि स्वेच्छादिवशात् इति नानाप्रकारपुराणादिस्थसृष्टिक्रमे कश्चिन्न विरोध इति । एते सर्वेऽपि सर्वज्ञत्वादिसकलशक्तिमंतः । तत्तदधिकारनैयत्यात्तु किंचिज्ज्ञत्वादिव्यवहारोऽपि स्वस्वोर्ध्वब्रह्मादिनियमता च । एवं ये जीवाः उपासनादिकर्मणा तत्तल्लोके सारूप्यं प्राप्तास्ते तत्तल्लोकीयब्रह्मवासुदेवादिभिः समानाकारत्वात् ब्रह्मादिसंज्ञाभाजो जीवा एव । एषामपि कर्मानुरूपं तत्तदधिकारभाक्त्वम् । एषां सर्वेषां मूलाभेदेन तदभेदस्य सत्त्वे स्वात्मांशे आवरणहीनतया तैर्ज्ञानं न च सार्वात्म्येन स्तुतिर्न विरुद्धा । एवं वा अंडादिकादिब्रह्मादीनां स्वप्रादुर्भूतब्रह्माभेदज्ञापनायैव प्राधानिकरहस्ये मुख्यलक्ष्म्यादिजन्यब्रह्मादीनामेव अंडस्रष्टृत्वतद्भेदकत्वतत्पालकत्वतत्संहारकत्वादीनि अग्रे उक्तानीति बोध्यम् । " स्वरया सह संभूय विरिंचोंऽडमजीजनत् । बिभेद भगवान् रुद्रस्तद्गौर्या सह वीर्यवान् ॥ " इत्यादिना । एवं च पृथिवीतत्त्वाधिष्ठातृभूतहरेर्योगनिद्रासंपादिकायास्तादृश्या अपि महाकाल्या मूलशक्त्यभेदादेव " तया विसृज्यते सर्वं । सा विद्या परमा मुक्तेः । " इत्यादिना क्रियमाणासार्वात्म्येन स्तुतिर्न विरुद्धा । एवं जडात्मिकायाः प्रकृतेश्चेतनरूपायाश्चिच्छक्तेश्चाधिष्ठात्र्यधिष्ठेययोरभेदं मत्वा " योगनिद्रा जगत्पतेः । सैषा प्रसन्ना वरदा । " इत्यादिना तत्र जडचेतनयोः सामानाधिकरण्यम् । अत्र मूलभूतजडशक्तेर्महामायाकुंडलिनीत्यादिशब्दैर्व्यवह्रियमाणाया अधिष्ठात्री चिच्छक्तिरपि तदभेदात् महामायादिसंज्ञाभाक् । एवं तमोमयी काली संज्ञाशक्तिरपि निद्रामोहादिभिः पुरुषज्ञानावरकत्वान्महामाया इत्युच्यते मूलशक्त्यभेदाच्च । सा चेयं शक्तिः मनोधिष्ठिता एव उपास्या । तत्र शक्तस्य शक्ति प्रत्याश्रयत्वेऽपि कार्योत्पत्तौ शक्तेरेव प्राधान्यमतः शक्तिरुपास्येति व्यवहारस्य नानुपपत्तिः । एवं मुक्तिदातृत्वं सर्वाश्रयत्वादिव्यवहारोऽपि समंजसः । उपास्यत्वं च महाकाल्यादिद्वारा मूलशक्तेरेवेति सर्वं समंजसम् । अन्यच्च तत्र तत्र वक्ष्यामः । अस्याः शापोद्धारोत्कीलने कात्यायनीतंत्रोक्ते त्रयोदशाध्यायं पठित्वा प्रथमं पठेत् । ततो द्वादशद्वितीयौ तत एकादशतृतीयद्वाविति क्रमेण पठेत् । सप्तमं द्विरिति शापोद्धारः । प्रथमं मध्यमचरित्रं पठित्वा ततः प्रथमतृतीये पठेदित्युत्कीलनमिति केरलाः । अथ प्रसंगात् स्तोत्रविधिः ।

तत्र वाराहीतंत्रे । " आधारे स्थापयित्वा तु पुस्तकं वाचयेत्ततः । हस्तसंस्थापनाद्देवि भवेदर्द्धफलं यतः ॥ यावन्न पूर्यतेऽध्यायस्तावन्न विरमेत्पठेत् । यदि प्रमादादध्याये विरामो भवति प्रिये ॥ पुनरध्यायमारभ्य पठेत्सर्वं मुहुर्मुहुः । अनुक्रमात्पठेद्देवि शिरःकंपादिकं त्यजेत् ॥ " तथान्यत्र । " प्रणवं पूर्वमुच्चार्य स्तोत्रं वा संहितां पठेत् । अंत्ये च प्रणवं दद्यादित्युवाचादिपूरुषः । नमोंऽतं च पठेत्स्तोत्रं वाचकं तु प्रशस्यते ॥ " यत्तु कीलके । " शनैस्तु जाप्यमानेऽस्मिन्स्तोत्रे संपत्तिरुच्चकैः । " इति । तदत्युच्चैः पाठनिषेधकं त्वरानिषेधकं च । " पुस्तके वाचनं शस्तं सहस्रादधिकं यदि । ततो न्यूनस्य तु भवेद्वाचनं पुस्तकं विना ॥ " विनापीत्यर्थः । " ऋषिं छंदोंऽगं विन्यस्य पठेत्स्तोत्रं समाहितः । स्तोत्रे न दृश्यते यत्र प्रणवं न्यासमाचरेत् ॥ भीष्मपर्वणि या गीता सा प्रशस्ता कलौ युगे । विष्णोः सहस्रनामाख्यं स्तोत्रं पापप्रणाशनम् ॥ गजेंद्रमोक्षणं चैव तथा कारुण्यकस्तवः । नारसिंहं तथा स्तोत्रं स्तोत्रं श्रीरामसंज्ञकम् ॥ देव्याः सप्तशतीस्तोत्रं तथा नामसहस्रकम् । श्लोकाष्टकं नैलकंठं शैवं नामसहस्रकम् ॥ त्रिपुरायाः प्रसादाख्यं सूर्यस्य स्तवराजकम् । पैत्रो रुचिस्तवो यश्च इंद्राक्षीस्तोत्रमेव च ॥ वैष्णवं च महालक्ष्म्याः स्तोत्रमिंद्रेण

**मार्कण्डेय उवाच ॥ सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः ॥ निशामय तदुत्पत्तिं विस्तराद्गदतो मम ॥ १ ॥**

भाषितम् । भार्गवाख्येन रामेण शप्तान्यन्यानि कारणात् ॥ शुद्धेनाचलचित्तेन पठितव्यं प्रयत्नतः । न स्वयं लिखितं स्तोत्रं नाब्राह्मणालिपि पठेत् ॥ नच स्वयं कृतं स्तोत्रं तथान्येन च यत्कृतम् । यतः कलौ प्रशंसंति ऋषिभिर्भाषितं तु यत् ॥ " क्वचित्तु " अष्टम्यां वा चतुर्दश्यां कृष्णायां तु समाहितः । ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति ॥ " इति कीलकग्रंथे सप्तशतीग्रन्थशिवशापतदुद्धारावुक्तौ । तथा वैकृतिकरहस्ये । " ततः कृतांजलिर्भूत्वा स्तुवीत चरितैरिमैः । एकेन वा मध्यमेन नैकेनेतरयोरिह । चरितार्धं तु न जपेज्जपंश्छिद्रमवाप्नुयात् ॥ " इति । " अर्गलां कीलकं चादौ जपित्वा कवचं पठेत् । जपेत्सप्तशतीं पश्चात्क्रम एष ऋचोदितः ॥ " इति केरलसंप्रदायः । इति स्तोत्रपठनविधिः ॥ ॐ नमश्चंडिकायै ॥ मार्कंडेय उवाच ॥ सावर्णिरिति ॥ सवर्णायाश्छायाया अपत्यं सावर्णिः । बाह्वादित्वादिञ् । विस्तराद्गदतो ममेति अपादानशेषत्वविवक्षायां षष्ठी । निशामय जानीहि । चुरादे रूपम् । तस्य नान्ये मितो हेताविति मित्त्वनिषेधः । सूर्यस्य तनय इति दक्षसावर्ण्यादिनिरासार्थः । यद्वा । यः यकारादष्टमो मनुर्हकारस्तस्य विशेषणम् । सूर्यतनय इति । स चाग्निस्तेजस्वित्वेन तन्निर्दिष्टत्वात्तेन तद्बीजं रेफो लभ्यते तद्रत्वं च

हकारस्य लक्षणयोच्यते । तस्यैव विशेषणांतरात्सावर्णिरिति । सवर्णा लोहितशुक्लकृष्णवर्णसहिता प्रकृतिः । तस्या अपत्यवत्संबंधी तद्वाचक ईकारः । तद्वत्त्वं लक्षणया । अंतिमो बिंदुस्तु श्लोके स्वरूपत एव निवेशित इति ईंह्रीं इति बीजं लब्धम् । तदुत्पत्ति तन्मंत्रं प्रतिपाद्य देवताया उत्पत्तिं निशामयेति संबंधः । यद्यपि एतदुपक्रमे प्रश्ने " अस्मिन् कल्पे सप्त येऽन्ये भविष्यंति महामुने । मनवस्तान्समाचक्ष्व तेषु देवादयश्च ये ॥ " इत्येवोक्तं तथापि सावर्णिकाख्यानकथनोत्तरं मार्कंडेयपुराणे " सावर्णिकमिदं सम्यक्प्रोक्तं मन्वंतरं तव । तथैव देवीमाहात्म्यं पृष्टमेतत्तवोदितम् ॥ " इत्युपसंहारेण तद्विषयक्रोष्टुकिप्रश्नस्यानयनात् उपक्रमप्रश्ननिबंधरूपलक्षणमिति बोध्यम् ॥ १ ॥ महामायेति ॥ विशसदप्रतीतिसाधना माया तस्या महत्त्वं च सर्वविषयत्वमिति महामाया ईश्वरशक्तिः तस्या अनुभावः इदमस्य भवत्वितीच्छा ।

महामायानुभावेन यथा मन्वंतराधिपः ॥ स बभूव महाभागः सावर्णिस्तनयो रवेः ॥ २ ॥ स्वारोचिषेंऽतरे पूर्वं चैत्रवंशसमुद्भवः ॥ सुरथो नाम राजाभूत्समस्ते क्षितिमण्डले ॥ ३ ॥ तस्य पालयतः सम्यक्प्रजाः पुत्रानिवौरसान् ॥ बभूवुः शत्रवो भूपाः कोलाविध्वंसिनस्तदा ॥ ४ ॥ तस्य तैरभवद्युद्धमतिप्रबलदण्डिनः ॥ न्यूनैरपि स तैर्युद्धे कोलाविध्वंसिभिर्जितः ॥ ५ ॥ ततः स्वपुरमायातो निजदेशाधिपोऽभवत् ॥ आक्रान्तः स महाभागस्तैस्तदा प्रबलारिभिः ॥ ६ ॥

मन्वंतरं किंचिदधिकैकसप्ततियुगात्मककालः । तथेत्यनेन तथा तं प्रकारं निशामयेत्यनुषंगो दर्शितः । भागं भगसमूहः । "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ " इति विष्णुपुराणात् । बभूवेति भूतवदुपचारः । तद्भवनस्यावश्यकत्वद्योतनाय सावर्णिस्तनयो रवेरिति संभ्रमे पुनरुक्तिः ॥ २॥ स्वारोचिषे इति ॥ स्वारोचिषाधिकारोपलक्षिते द्वितीयमन्वंतरे । पूर्वमिति कथाकालापेक्षया । चैत्रस्तस्यैव मनोः सुतः । नामेति प्रसिद्धौ ॥ ३ ॥ तस्येति ॥ सम्यङ्नीतिशास्त्रानुसारेण । कोला सुरथस्यैव राजधान्यंतरम् । तथा अतिशयेन कोलाविध्वंसिन इत्यर्थः ॥ ४ ॥ तस्य तैरिति ॥ अतिप्रबलदंडकर्तुः छांदसत्वात्कर्मधारयादिनिः । इदं पराजयनिमित्तं न्यूनैरल्पसाधनैः ॥ ५ ॥ तत इति ॥ ततः भंगानंतरम् । तैः प्रबलैः अरिभिः शत्रुभिराक्रांत आक्रमितः महाभागः स्वपुरमायातः निजदेशाधिप

एवाभवत् । न सार्वभौम इत्यर्थः । भाव्ये तज्जन्मभवजन्मांतरीयमहाराज्यमिति बुद्धौ स्वीकृत्य महाभाग इत्युक्तम् ॥६ ॥ अमात्यैरिति ॥ ततः तस्य । सार्वविभक्तिकस्तसिः । तत्र स्वपुरेऽतिकोशोऽर्थसंचयः बलं सैन्यं चापहृतमात्मसात्कृतम् । दुष्टत्वं राजविषयद्वेषवत्त्वं दुरात्मत्वं राज्यलोभाक्रांतत्वं दुर्बलत्वं क्षीणबलवत्त्वं रिपुकृताभिभवात् ॥ ७ ॥ तत इति ॥ हृतस्वाम्यः हृताधिपत्यः । एकाकी असहायः ॥ ८ ॥ स तत्रेति ॥ मेधा इति ऋषिनाम । वस्तुतो वसिष्ठस्य नामांतरमिदम् । " अमुष्याः सावताराया महालक्ष्म्या अमानुषम् । जन्मानि चरितैः सार्द्धैः स्तोत्रैर्वा वेदवादिना ॥ कथितानि पुरा शक्र वसिष्ठेन महात्मना । स्वारोचिषेऽतरे राज्ञे सुरथाय महात्मने। समाधये च वैश्याय प्रणताय च सीदत ॥ " इति लक्ष्मीतंत्रोक्तेः । " श्रीशस्तु रूपमास्थाय पुरा विप्रस्य मेधसः । स्वमायां ज्ञापयामास सुरथाय समाधये ॥ "

अमात्यैर्बलिभिर्दुष्टैर्दुर्बलस्य दुरात्मभिः ॥ कोशो बलं चापहृतं तत्रापि स्वपुरे ततः ॥ ७ ॥ ततो मृगयाव्याजेन हृतस्वाम्यः स भूपतिः ॥ एकाकी हयमारुह्य जगाम गहनं वनम् ॥ ८ ॥ स तत्राश्रममद्राक्षीद्द्विजवर्यस्य मेधसः ॥ प्रशांतश्वापदाकीर्णं मुनिशिष्योपशोभितम् ॥ ९ ॥ तस्थौ कंचित्स कालं च मुनिना तेन सत्कृतः ॥ इतश्चेतश्च विचरंस्तस्मिन् मुनिवराश्रमे ॥ १० ॥ सोऽचिंतयत्तदा तत्र ममत्वाकृष्टचेतनः ॥ मत्पूर्वैः पालितं पूर्वं मया हीनं पुरं हि तत् ॥ ११ ॥ मद्भृत्यैस्तैरसद्वृत्तैर्धर्मतः पाल्यते न वा ॥ न जाने स प्रधानो मे शूरहस्ती सदामदः ॥ १२ ॥

इत्यन्यत्र । प्रशांतत्वं परहिंसाविरहत्वं मुनिभिस्तच्छिष्यैश्च शोभितमित्यर्थः ॥ ९॥ तस्थाविति ॥ कंचित्कालमिति " कालाध्वनोः० " इति द्वितीया । इतश्चेतः अनियतदिग्देशम् । मुनिवरेति भागुरिसंबोधनम् आश्रमविशेषणं वा ॥१०॥ सोऽचिंतयदिति ॥ ममेति षष्ठ्यंतप्रतिरूपकमव्ययं तस्य भावो ममत्वम् । ममेदमित्यभिमानः तेनाकृष्टा निवृत्तिमार्गादपकृष्टा चेतना बुद्धिर्यस्य सः । मत्पूर्वैः पूर्वजैरित्यर्थः । हि पादपूरणे उत्तरश्लोकेनान्वयः । मानस इति पाठेऽपि आकृष्टं मानसं यस्य ॥ ११ ॥ मद्भृत्यैरिति ॥ तथा पालने हेतुरसद्वृत्तैरिति । प्रधानैर्महामात्रैः सहितः सप्रधानः । शूरहस्तीति कर्मधारयः । किमवस्थ इति न जाने इत्यन्वयः ॥ १२ ॥

ममेति ॥ वशं पारतंत्र्यम् । कान् कियंतः कीदृशान्वा न जाने इत्यस्यानुषंगः । अनुगताः सेवकत्वे हेतुः प्रसादेत्यादि । प्रसादस्तुष्टिदानं धनं मासिकादिवेतनं भोजनं प्रतिदिनं दीयमानं तैः ॥१३॥ अनुवृत्तावपि एते एव हेतवः । ध्रुवमिति वितर्के । हा मां धिगित्यध्याहारः। असम्यगिति श्रियोर्थे । तुरीयांशाधिको व्ययः सम्यग्व्ययं सततमिति समस्तम् ॥१४॥ दुःखेनेति निर्विसर्गं पठंति । विसर्गतः कोशो मूलधनमन्यदनुक्तमपि ॥१५ ॥ तत्रेति ॥ विप्रेति भागुरिसंबोधनं मेधार्थकृतयाऽऽश्रमविशेषणं वा। अभ्याशे निकटे स वैश्यः । भो इत्यामंत्रणे अत्र आश्रमे ॥ १६ ॥ सशोक इति ॥ इष्टवियोगानुचिंतनं शोकः । दुःखनिबंधनचिंतावसादो दुर्मना दौर्मनस्यं सशोक

मम वैरिवशंयातः कान्भोगानुपलप्स्यते ॥ ये ममानुगता नित्यं प्रसादधनभोजनैः ॥ १३ ॥ अनुवृत्तिं ध्रुवं तेऽद्य कुर्वंत्यन्यमहीभृताम् ॥ असम्यग्व्ययशीलैस्तैः कुर्वद्भिः सततं व्ययम् ॥ १४ ॥ संचितः सोऽतिदुःखेन क्षयं कोशो गमिष्यति ॥ एतच्चान्यच्च सततं चिंतयामास पार्थिवः ॥१५॥ तत्र विप्राश्रमाभ्याशे वैश्यमेकं ददर्श सः ॥ स पृष्टस्तेन कस्त्वं भो हेतुश्चागमनेऽत्र कः ॥१६॥ सशोक इव कस्मात्त्वं दुर्मना इव लक्ष्यसे ॥ इत्याकर्ण्य वचस्तस्य भूपतेः प्रणयोदितम् ॥ १७ ॥ प्रत्युवाच स तं वैश्यः प्रश्रयावनतो नृपम् ॥

वैश्य उवाच ॥ समाधिर्नाम वैश्योऽहमुत्पन्नो धनिनां कुले ॥ १८ ॥ पुत्रदारैर्निरस्तश्च धनलोभादसाधुभिः ॥ विहीनः स्वजनैर्दारैः पुत्रैरादाय मे धनम् ॥ १९ ॥ वनमभ्यागतो दुःखी निरस्तश्चाप्तबन्धुभिः ॥ सोऽहं न वेद्मि पुत्राणां कुशलाकुशलात्मिकाम् ॥ २० ॥

इव उपहतशरीरत्वात् दुर्मना इव क्रियास्वस्थैर्यात् । इत्याकर्ण्येति श्लोकः स्पष्टार्थः । प्रणयो विश्रंभः ॥ १७ ॥ प्रश्रयो विनयः । मार्कंडेयेन सुरथं प्रति ऋष्युक्तावनुदितायां भागुरेः वैश्य उवाचेति जिज्ञासामालक्ष्य मार्कंडेय आह । वैश्य उवाच ॥ समाधिरिति ॥ १८ ॥ असाधुभिः पुत्रदारैर्धनलोभान्निरस्तः । अधिक्षिप्तो भर्त्सित इति यावत् । चादन्यैरपीत्यर्थः । विहीनश्चेति । दारैः पुत्रैर्मे धनमादाय गृहीत्वा धनैर्विहीनश्च अंशस्याप्यदानात्तद्रहितः कृतोऽहम् ॥ १९ ॥ धनहीनत्वादेवाप्तैः सुहृद्भिः

वंधुभिश्च निरस्तस्त्यक्तोऽहं वनमभ्यागत इत्यन्वयः । सोऽहमिति ॥ २० ॥ प्रवृत्तिर्वार्ता । ता एव विवृणोति । किं न्विति । किंन्विति द्वयं विकल्पे । तेषां पुत्रदारस्वजनानां गृहे दारापत्यादौ कथं ते किंविधस्ते वृत्तं व्यवहारः । सुता इत्युपलक्षणम् ॥ २१ ॥ राजोवाच ॥ यैरिति । धनैरिति भर्त्सने रूपनिरासे हेतुः । किमिति प्रश्ने ॥ २२ ॥ वैश्य उवाच ॥ एवमिति ॥ अस्मद्गतमस्मदीयविषयम् ॥ २३ ॥ यैरिति ॥ यैः पुत्रदारस्वजनैः पतिहार्दं स्वजनहार्दं च । हार्दं स्नेहः तेष्वपि तथाविधे-

प्रवृत्तिं स्वजनानां च दाराणां चात्र संस्थितः ॥ किं नु तेषां गृहे क्षेममक्षेमं किं नु सांप्रतम् ॥ २१ ॥ कथं ते किं नु सद्वृत्ता दुर्वृत्ताः किं नु मे सुताः ॥ राजोवाच ॥ यैर्निरस्तो भवाँल्लुब्धैः पुत्रदारादिभिर्धनैः ॥ तेषु किं भवतः स्नेहमनुबध्नाति मानसम् ॥ २२ ॥ वैश्य उवाच ॥ एवमेतद्यथा प्राह भवानस्मद्गतं वचः ॥ किं करोमि न बध्नाति मम निष्ठुरतां मनः ॥ २३ ॥ यैः संत्यज्य पितृस्नेहं धनलुब्धैर्निराकृतः ॥ पतिस्वजनहार्दं च हार्दितेष्वेव मे मनः ॥२४॥ किमेतन्नाभिजानामि जानन्नपि महामते ॥ यत्प्रेमप्रवणं चित्तं विगुणेष्वपि बंधुषु ॥ २५ ॥ तेषां कृते मे निःश्वासो दौर्मनस्यं च जायते ॥ करोमि किं यन्न मनस्तेष्वप्रीतिषु निष्ठुरम् ॥ २६ ॥ मार्कंडेय उवाच ॥ ततस्तौ सहितौ विप्र तं मुनिं समुपस्थितौ ॥ समाधिर्नाम वैश्योऽसौ स च पार्थिवसत्तमः ॥ २७ ॥ कृत्वा तु तौ यथान्यायं यथार्हं तेन संविदम् ॥ उपविष्टौ कथाः काश्चिच्चक्रतुर्वैश्यपार्थिवौ ॥ २८ ॥

ष्वपि मे मनः ॥ २४ ॥ किमेतदिति ॥ तेषां दोषं जानन्नपि यत् विगुणेष्वपि बंधुषु प्रेमप्रवणं चित्तं करोमि तत्किमिति कस्माद्धेतोरेतन्न जानामि इत्यन्वयः ॥ २५ ॥ तेषामिति ॥ तन्निमित्तं यन्मे निःश्वासादिकं जायते । अप्रीतिषु प्रीतिरहितेषु यन्मे मनो निष्ठुरं न तत्किं करोमीत्यन्वयः ॥ २६ ॥ मार्कंडेय उवाच ॥ तत इति ॥ सहितौ मित्रत्वेन संगतौ समुपस्थितौ समुपसत्तौ ॥ २७ ॥ कृत्वेति ॥ यथान्यायं यथाशास्त्रं यथार्हं यथायोग्यं संविदं संभाषाम् । उपविष्टौ अंतर्भावितण्यर्थत्वेनोप-

वेशितावित्यर्थः । तेनेति कर्तरि तृतीया । काश्चित्स्वपरविषयाः ॥ २८ ॥ राजोवाच ॥ भगवन्निति ॥ वदस्वेति यत्नार्थे आत्मनेपदम् । यत्नेन वदेत्यर्थः । एकं रहस्यं वदस्व तदाह । मे मनसः संकल्पात्मकस्यांतःकरणस्य स्वचित्ते निश्चयात्मके स्वस्वरूपे आयत्ततां निरोधं विना दुःखाय यदित्यन्वयः । संकल्पविकल्पात्मकमेवमंतः-करणं न निश्चयात्मकमतो न तन्निर्णयेऽधिकार इति भावः ॥ २९ ॥ दुःखहेतुत्वमाह—ममत्वमिति ॥ राज्यस्येति सप्तम्यर्थस्य शेषत्वविवक्षायां षष्ठी । राज्ये इत्यर्थः । तेष्वमदीयत्वं जानतोऽपि मम यथा अज्ञस्य अज्ञस्येव राज्यादिषु ममत्वम् एतत्किम् । किं निबंधनमित्यर्थः । " स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्यां-गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ " एषु स्वाम्यं प्रधानम् ॥ ३० ॥ नाहमेव तथा अयमपीत्याह–अयं च निकृत इति ॥ निकृतस्तिरस्कृतः उज्झितस्त्यक्तः ।

**राजोवाच ॥ भगवंस्त्वामहं प्रष्टुमिच्छाम्येकं वदस्व तत् ॥ दुःखाय यन्मे मनसः स्वचित्तायत्ततां विना ॥ २९ ॥ ममत्वं गतराज्यस्य राज्यांगेष्वखिलेष्वपि ॥ जानतोऽपि यथाज्ञस्य किमेतन्मुनिसत्तम ॥ ३० ॥ अयं च निकृतः पुत्रैर्दारैर्भृत्यैस्तथोज्झितः ॥ स्वजनेन च संत्यक्तस्तेषु हार्दी तथाप्यति ॥ ३१ ॥ एवमेष तथाहं च द्वावप्यत्यंतदुःखितौ ॥ दृष्टदोषेऽपि विषये ममत्वाकृष्टमानसौ ॥ ३२ ॥ तत्केनैतन्महाभाग यन्मोहो ज्ञानिनोरपि ॥ ममास्य च भवत्येषा विवेकांधस्य मूढता ॥ ३३ ॥ ऋषिरुवाच ॥ ज्ञानमस्ति समस्तस्य जंतोर्विषयगोचरे ॥ विषयश्च महाभाग याति चैवं पृथक्पृथक् ॥ ३४ ॥**

नीत्युपसर्गपूर्वात् कृञः क्तः । तथेति समुच्चये ॥ ३१ ॥ एवमिति ॥ विषये राज्यपुत्रादौ ममत्वेनाकृष्टं विषयाधीनं कृतं मानसमंतःकरणं ययोस्तौ ॥ ३२ ॥ तत्केनेति ॥ ज्ञानिनोर्विषये दोषवत्त्वज्ञानवतोरपि ममास्य चेति सर्वान्वयि । उभयनिष्ठमोहस्य युक्तत्वमाह । यत् यतः एषा एतज्जातीया मूढता अविवेकांधस्य अविवेकवतः भव-ति नतु दोषज्ञानरूपविवेकवत इति । आवयोः सा युक्तेति भावः ॥ ३३ ॥ अत्रोत्तरमाह–ऋषिरुवाच ॥ ज्ञानमिति ॥ ननु ज्ञानमात्रस्य मोहवैयधिकरण्यं तत्राभिमतं ज्ञानविशेषस्य वा । नाद्यः । सर्वस्यैव निर्मोहत्वप्रसंगादित्याह । ज्ञानमिति । अंत्यस्तु तथापीत्यनेन खंडयिष्यते । विषिणोति बध्नातीति विषयो बंधकः । तद्रूपे गोचरे

विषये ज्ञानं सर्वस्य जंतोरस्ति । न च मोहाभाव इत्याह । विषयश्चेति । एवं वक्ष्यमाणप्रकारेण पृथक्पृथक् भिन्नप्रकारेण ज्ञानविषयत्वं यातीत्यर्थः ॥ ३४ ॥ तदेवाह–दिवांधा इति ॥ केषांचिदुलूकादीनां दिवा ज्ञानाभावः केषांचित्काकादीनां रात्रौ केषांचित्किंचुलुकादीनां सर्वदा तथा तथा तुल्यदृष्टयः अंधा अनंधा इत्यर्थः । एवं च ज्ञानमात्रस्य मोहवैयधिकरण्ये दिनादौ उलूकादीनां मोहो न स्यादिति भावः । किंच राक्षसादीनां दिवा रात्रौ च विषयज्ञानवतां न कदाचिदपि मोहः स्यात् । किंचुलुकादीनां सर्वदैव मोहप्रसंग इति तेषामपि किंचिद्विषयमोहदर्शनात् । एवं च न ज्ञानमात्रस्य मोहवैयधिकरण्यं नापि ज्ञानाभावस्य मोहसामानाधिकरण्यमित्युक्तं भवति । अत्र तथेति रात्रिसमुच्चये ॥ ३५ ॥ ननु मनुष्या एव ज्ञानित्वेनाभिमता इति चेत्तत्राह–ज्ञानिन इति ॥ मनुजा ज्ञानिन इति ते मतं सत्यं पृच्छति ।

दिवांधाः प्राणिनः केचिद्रात्रावंधास्तथापरे ॥ केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टयः ॥ ३५ ॥ ज्ञानिनो मनुजाः सत्यं किं नु तेन हि केवलम् ॥ यतो हि ज्ञानिनः सर्वे पशुपक्षिमृगादयः ॥ ३६ ॥ ज्ञानं च तन्मनुष्याणां यत्तेषां मृगपक्षिणाम् ॥ मनुष्याणां च यत्तेषां तुल्यमन्यत्तथोभयोः ॥ ३७ ॥ ज्ञानेऽपि सति पश्यैतान्पतगाञ्छावचंचुषु ॥ कणमोक्षादृतान्मोहात्पीड्यमानानपि क्षुधा ॥ ३८ ॥ मानुषा मनुजव्याघ्र साभिलाषाः सुतान्प्रति ॥ लोभात्प्रत्युपकाराय नन्वेते किं न पश्यसि ॥ ३९ ॥

ते केवलं ज्ञानिनः ज्ञानिन एव किं नु स्वयमेव वितर्क उत्तरयति । नहि किंत्वज्ञानसंवलितज्ञानिन इत्यर्थः । एवमज्ञानेन ज्ञानित्वाभिमानस्त्वयुक्तः । यतः सर्वे पश्वादयोऽपि एवं सति ज्ञानिन एव स्युः । हिरिवार्थे । भिन्नक्रमश्च पशुत्वेनैव सिद्धे मृगग्रहणं तद्विशेषप्रतिपत्त्यर्थमित्यर्थः ॥ ३६ ॥ तमेवार्थं मनुष्याणां पश्वादिभिस्तुल्यत्वप्रतिपादनेन द्रढयति–ज्ञानं चेति ॥ यत् यादृशं तत् तादृशं मनुष्याणां च यत्तेषां मृगादीनामित्यर्थः । अन्यदाहारभयमैथुननिद्रारूपमिति उभयोस्तुल्यं साधारणमित्यर्थः ॥ ३७ ॥ अर्थक्रियासाम्यमपि तयोरस्तीत्याह–ज्ञानेऽपीति ॥ तद्भोजनेन नास्माकं तृप्तिरिति ज्ञाने सत्यपि । पतगानिति निरनुस्वारम् ॥ ३८ ॥ स्वशरीरापेक्षया बहिरंगेष्वपि अतिप्रीतिरिति तेषु मोहज्ञानयोः सामानाधिकरण्यमुपपाद्य मनुष्येष्वप्याह–मानुषा इति ॥ व्याघ्रशब्दः श्रेष्ठवाची । मानुषाः लोभात् प्रत्यु-

पकारलोभात् सुतान् प्रति साभिलाषाः । एते सुताश्च तु निश्चयेन प्रत्युपकाराय न भवंति । इदं किं न पश्यसीत्यर्थः । एवं पूर्वपूर्वव्यवहारं पश्यंतोऽपि अग्रे अग्रे पुनः सुताभिलाषा इति मोहज्ञानयोः सामानाधिकरण्यम् । तेष्वपीति भावः ॥ ३९ ॥ नन्वेवंविधव्यवहारदर्शिनां संसाराद्विरक्तिः कुतो नेत्यत आह–तथापीति ॥ एवंविधलोकव्यवहारसाक्षात्कारो यद्यप्यस्ति तथापीत्यर्थः । महामायाप्रभावेन कर्त्री ममता ममेदमिति बुद्धेरेव भ्रामकत्वादावर्त्त इवावर्त्तः संसारे पुनः पुनरावर्त्तको यत्र तादृशे मोहगर्त्ते निपातिताः मानुषाः संसारस्थितिं तामेवं कुर्वंति न तु ततो विरज्यंत इत्यर्थः । आवर्त्तोऽम्भसां भ्रमः ॥ ४० ॥ ननु मायाया आश्चर्येयं शक्तिरत आह–तदिति ॥ योगनिद्रा तमः एतज्जगत्तया संमोह्य इत्यन्वयः । जगत्पतित्वेन तस्य मोह्यकोटिबहिर्भावः सूचितः ॥ ४१ ॥ भवादृशानां संसारिणां का वार्ता अपक्वकषा-

तथापि ममतावर्ते मोहगर्ते निपातिताः ॥ महामायाप्रभावेन संसारस्थितिकारिणा ॥ ४० ॥ तन्नात्र विस्मयः कार्यो योगनिद्रा जगत्पतेः ॥ महामाया हरेश्चैषा तथा संमोह्यते जगत् ॥ ४१ ॥ ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥ बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ ४२ ॥ तया विसृज्यते विश्वं जगदेतच्चराचरम् ॥ सैषा प्रसन्ना वरदा नृणां भवति मुक्तये ॥ ४३ ॥ सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ॥ संसारबंधहेतुश्च सैव सर्वेश्वरेश्वरी ॥ ४४ ॥

याणां योगिनामपि सा मोहिकेत्याह–ज्ञानिनामपीति ॥ आकृष्येत्यस्य विवेकादित्यादि । मोहाय प्रयच्छति मोहवंति करोतीत्यर्थः । एवं च स्वकर्तव्यसृष्टिवृद्धये एवंप्रभावा सेत्यर्थः ॥४२॥ विश्वं समस्तम् । नन्वेवं मुक्तिर्दुर्लभैव स्यात्तदाह । सैषेति । मोहकारणमपि सा उपासनादिभिः स्वार्पितनित्यकर्मादिभिश्च प्रसन्ना मोक्षाय वरदा भवति ॥ ४३ ॥ नन्वेकस्यैव वस्तुनो बंधमोक्षोभयहेतुतानुपपन्नेत्यत आह–सा विद्येति ॥ सर्वेश्वरस्येश्वरी ईश्वरत्वसंपादिका अतो न काचिदसंभावना तस्यामित्यर्थः । किं च विद्याविद्योभयरूपत्वादपि नैतदसंगतिरित्याह । परमा उत्तमपुरुषार्थसाधनीभूता विद्या ब्रह्मज्ञानरूपा सैव सनातनी अनाद्यनंता च । संसारबंधहेतुरविद्या च

सैवेत्यर्थः । एवं च चिज्जडप्रकृत्युभयात्मकत्वादुभयहेतुता उपपन्नेति भावः ॥ ४४ ॥ विशेषजिज्ञासया पुनः पृच्छति–राजोवाच ॥ भगवन्निति ॥ का किंजातीया कथं केन प्रकारेण अस्याः कर्म च किम् ॥ ४५ ॥ यत्प्रभावेत्यादिना स्वभावस्वरूपोत्पत्तिकारणप्रश्नत्रयं ब्रह्मविदांवर इत्यनेन ऋषिप्रोक्तसर्वप्रकरणस्य श्रुतिशिरोऽनुजायित्वं स्फुटितम् ॥ ४६ ॥ उत्तरयति–ऋषिरुवाच ॥ नित्यैवेति ॥ जगन्मूर्तिरित्यनेन जगदतिरिक्तमुख्यशरीराभावो ध्वनितः । जगदाश्रयभूता शक्तिरित्यर्थः । तेन जातिप्रश्नोत्तरं स्वरूपप्रश्नोत्तरं च । " तया सर्वमिदं ततम् " इत्यनेन स्वभावोत्तरम् । दृष्टिस्वभावा सेत्यर्थः । ततं विस्तारितमित्यर्थः । व्याप्तमिति च इत्यर्थकस्य चित्स्वभावा चेत्यर्थः । सृष्टीत्युपलक्षणम् । नित्येत्यनेन मुख्योत्पत्तेरभावात्कारणस्य सुतरामभावेन गौण्यौ कारणोत्पत्ती इति दर्शितम् । ते उत्पत्तितत्कारणप्रश्नोत्तरं तत्समुत्पत्तिः

राजोवाच ॥ भगवन् का हि सा देवी महामायेति यां भवान् ॥ ब्रवीति कथमुत्पन्ना सा कर्मास्याश्च किं द्विज ॥ ४५ ॥ यत्प्रभावा च सा देवी यत्स्वरूपा यदुद्भवा ॥ तत्सर्वं श्रोतुमिच्छामि त्वत्तो ब्रह्मविदांवर ॥ ४६ ॥ ऋषिरुवाच ॥ नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततम् ॥ तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ॥ ४७ ॥ देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ॥ उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥ ४८ ॥ योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते ॥ आस्तीर्य शेषमभजत्कल्पांते भगवान्प्रभुः ॥ ४९ ॥

सा गौरी ममेत्यपादानस्य शेषत्वविवक्षायां षष्ठी । मत्त इत्यर्थः ॥४७ ॥ देवानां कार्यसिद्ध्यर्थमिति सर्वकर्मप्रश्नोत्तरम् । अनेनैव देवप्रार्थनया आविर्भावस्य ध्वननात्कयमुत्पन्नेत्युत्तरमपि ॥ ४८ ॥ कथं देवप्रार्थनया तत्कार्यसिद्ध्यर्थमवतार इति जिज्ञासायां तां निवर्तयितुं मोहकारणस्यैव च राज्ञः पृष्टत्वेनादौ मोहिकायास्तमोगुणप्रधानाया अवतारं वक्तुमितिहासमाह–योगनिद्रामिति ॥ कल्पांते ब्रह्मादिनांते योगनिद्रां तामसीं शक्तिं भगवान् " उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ " उक्तलक्षणः । तेन भूतानां प्रलयकालं ज्ञात्वा सेयं पालनव्यवहारतिरोधानमंतरा तदसंभवं मत्वा स्वपालनव्यवहारतिरोधायिकां तामसीं शक्तिमभजत् । पटेनेव तयात्मानमावृतवानित्यर्थः । प्रभुरित्यनेन स्वेच्छया तदंगीकारः नतु तया बलादस्यावरणमिति ध्वनितम् । अत एव योगनि-

द्रेत्युक्तम् । इतरजननिद्रावत् मोहपारवश्यापादनी भवति । लीलया सखीवल्लोचनपिधानमात्रं करोति । तदुक्तं हरिवंशे । "सखी सर्वसहस्यैषा माया विष्णोः शरीरजा । सैषा नारायणमुखे स्थिता कमललोचना ॥" इति । तेन अतः स्वस्वरूपज्ञानावरकत्वं प्रदर्शितम् ॥ ४९ ॥ तदेति ॥ मलोद्भूतावित्यनेनानयोरतितामसत्वं सूचितमितरत्स्पष्टम् ॥ ५० ॥ तत्र ब्रह्मा क्वेत्यत आह–स नाभिकमले इति ॥ प्रजापतिर्नियंतेति ब्रह्मणो विशेषणम् । प्रसुप्तं त्यक्तपालनव्यवहारम् ॥ ५१ ॥ तुष्टावेति ॥ स एकाग्रमनवच्छिन्नं हृदयं यस्य स तादृशः स्थितः सन्नित्यर्थः । हृदयस्थित इत्यतः खर्परे शरि वा विसर्गलोपः । विबोधनार्थाय पालनव्यवहारप्रवृत्त्यर्थं नेत्रेत्युपलक्षणम् । सर्वांगस्थितत्वात्तस्याः लोके नेत्रयोरेव भूयो निद्राभिव्यक्तिमत्त्वात् नेत्रेत्युक्तिः ॥ ५२ ॥ योगनिद्रायाः मूलशक्त्यभेदं मत्वा विशेषयति–विश्वेश्वरीमिति ॥

तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ ॥ विष्णुकर्णमलोद्भूतौ हंतुं ब्रह्माणमुद्यतौ ॥ ५० ॥ स नाभिकमले विष्णोः स्थितो ब्रह्मा प्रजापतिः ॥ दृष्ट्वा तावसुरौ चोग्रौ प्रसुप्तं च जनार्दनम् ॥ ५१ ॥ तुष्टाव योगनिद्रां तामेकाग्रहृदयस्थितः ॥ विबोधनार्थाय हरेर्हरिनेत्रकृतालयाम् ॥ ५२ ॥ विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ॥ निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥ ५३ ॥ ब्रह्मोवाच ॥ त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ॥ सुधा त्वमक्षरे नित्ये त्रिधामात्रात्मिका स्थिता ॥ ५४ ॥ अर्धमात्रा स्थिता नित्या यानुच्चार्या विशेषतः ॥ त्वमेव सा त्वं सावित्री त्वं देवि जननी परा ॥ ५५ ॥

तत्त्वमेव विविच्याह । जगद्धात्रीमित्यादि । धात्रीं जननीम् । अनेन जगदुत्पत्तिस्थितिलयकर्तृत्वं ब्रह्मलिंगं दर्शितम् । अतुलामित्यंतानि विष्णुनिद्राविशेषणानि । तेजसः प्रभुरिति ब्रह्मविशेषणम् । तत्स्तुत्यत्वेनात्युत्कर्षोऽस्या ध्वनितः । विष्णुमोहकतया इतरमोहकत्वमनाश्चर्यमित्यपि ध्वनित आयातोऽर्थः । वस्तुतो विष्णोरिति राहोः शिर इतिवत् षष्ठी । विष्णुरूपां निद्रामित्यर्थः । ब्रह्मापि सर्वेश्वरः सर्वशक्तिमान् लोकानुग्रहाय स्वयं मोहित इव दुःखनिवृत्तये इव भगवतीं स्तौति । ऋषेः सर्वज्ञत्वादि चैषां सर्वात्मत्वं सर्वशक्तीनामुपक्रमे दर्शितमेवेति न कश्चिद्विरोधः ॥ ५३ ॥ कथं तुष्टावेत्यत आह–ब्रह्मोवाच ॥ त्वमिति ॥ स्वाहा देवदानमंत्रोऽग्निपत्नी च । स्वधा

पित्र्यदानमंत्रः पितृपत्नी च । वषट् क्रियते यत्र स वषट्कारो यज्ञो यज्ञदेवाह्वानमंत्रश्च । स्वराः षोडश आदयस्तदात्मिका च सुधा देवान्नम् । अक्षरे उपचयापचयपरिणामहीने आभ्यां सत्तामात्ररूपत्वम् । त्रिधामात्रात्मिका ह्रस्वदीर्घप्लुतरूपा अर्द्धमात्रा व्यंजनरूपा । अविशेषकत्वाद्ध्वन्यलिंगितया अनुच्चार्यत्वं तदालिंगिता नु तथेति बोध्यम् । त्रिधेत्यतो विशेषत इत्यंतेन प्रणवरूपता चोक्ता । मात्रात्रयमकारोकारमकारात्मकम् । तदूर्ध्वमर्द्धमात्रा तत्र मात्रात्रयं जाग्रत्स्वप्नसुषुप्त्यभिमानिविश्वतैजसप्राज्ञाभिधेयम् । अर्द्धमात्रा तु वेदांतवाक्यार्थभूतनित्यमुक्ततुरीयाभिधेया । तदुक्तम् । " व्यक्ता तु प्रथमा मात्रा द्वितीयाव्यक्तसंज्ञिता । मात्रा तृतीया चिच्छक्तिरर्द्धमात्रा परं पदम् ॥ " इति । त्वमेवेति । सा त्वमेवेति पूर्वान्वयित्वम् । सावित्री तत्सवितुरिति ऋक् तदधिष्ठात्री । तद्वाच्या चेत्यर्थः । हे देवि त्वं परा उत्कृष्टा

त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ॥ त्वयैतत्पाल्यते देवि त्वमत्स्यंते च सर्वदा ॥ ५६ ॥ विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ॥ तथा संहृतिरूपांते जगतोऽस्य जगन्मये ॥ ५७ ॥ महाविद्या महामाया महामेधा महास्मृतिः ॥ महामोहा च भवती महादेवी महासुरी ॥ ५८ ॥

जननी सर्वजनकत्वात् सर्ववाग्जननी परा च ॥ ५४ ॥ ५५ ॥ सर्वं जगत् त्वयैव धार्यते सर्वधारणशक्तिमती त्वमेव । अग्रे एतत्पदानि सर्वपरामर्शकानि । अत्सि आत्मसात्करोषि । तैश्च ब्रह्मलिंगं दर्शितम् ॥ ५६ ॥ त्वयैतत्पाल्यते सृष्ट्यादिक्रियारूपापि त्वमेवेत्याह–विसृष्टाविति ॥ सप्तम्यंतानि तत्काललाक्षणिकानि । तथेति । जगद्रूपे इत्यर्थके जगन्मये इत्यत्र च्छांदसत्वात् ङीबभावः ॥ ५७॥ महाविद्या महावाक्यलक्षणा महामाया सच्चिदानंदे आत्मनि संसारत्वरूपानर्थावभासहेतुमूलविद्या । महामेधा भगवतः सर्वत्वशक्तिः । महास्मृतिः विधेः सृष्ट्यनुकूलातीतकल्पगतसकलवस्तुस्मृतिरूपा देवरूपा च । महामोहेति संसारसमूलकारणरागरूपमोहस्वरूपा । महादेवी सकलदेवशक्तिरूपा । महासुरी हिरण्याक्षादिरूपा ॥ ५८ ॥

सत्त्वरजस्तमोगुणत्रयैर्विभाव्यते या सर्वस्य जडवर्गस्य प्रकृतिः मूलं प्रधानतत्त्वाख्यं त्वमेव । एतेन परमाण्वादीनां मूलकारणत्वनिरासः । कालरात्रिरिति ब्रह्मलयोपलक्षिता । महारात्रिः प्रलयरात्रिः । मोहरात्रिः ममतावर्तमोहगर्तपातिनी । महामायाख्या संसृतिकर्त्री । उक्तं च । " दंष्ट्राकरालकालाग्निरुद्रकल्पातिदारुणा । मोहरात्रिर्मोहतनुर्जगत्सूते जगत्करी ॥ " इति । दारुणत्वं चास्य ब्रह्मज्ञानातिरिक्ता निवर्त्यत्वेन मोहरात्रिर्निशा च । " अस्यास्तनुस्तमोद्वारा निशा दिवसनाशिनी । " इति हरिवंशोक्तेः ॥ ५९ ॥ श्रीः संपत् लक्ष्मीबीजं च । ईश्वरी ऐश्वर्यशक्तिः कामराजबीजं च । ह्रीः भुवनेशी बीजं च । उभयत्राप्यनुनासिकलोपश्छांदसः । बोधो निर्णयात्मकज्ञानलक्षणं स्वरूपं यस्यास्तादृशी बुद्धिरंतःकरणम् । त्वमेवेत्यर्थः । लज्जेति । अंतःकरणवृत्तिविशेषः पुष्टिरुपचयः तुष्टिरधिगतार्थादन्यत्र तुच्छत्वबुद्धिः । शांतिः विषयेभ्य इंद्रियोपरमः । क्षांतिः सत्यां शक्तौ परापराधसहिष्णुता । एवकारस्त्वमित्यनंतरे योज्यः ॥ ६० ॥ घोरा एकहस्तस्थशिरसा भयंकरी । शंखिनीति ।

**प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ॥ कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥ ५९ ॥ त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ॥ लज्जा पुष्टिस्तथा तुष्टिस्त्वं शांतिः क्षांतिरेव च ॥ ६० ॥ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥ शंखिनी चापिनी बाणभुशुंडीपरिघायुधा ॥ ६१ ॥ सौम्यासौम्यतराशेषसौम्येभ्यस्त्वतिसुंदरी ॥ परापराणां परमा त्वमेव परमेश्वरी ॥ ६२ ॥**

बाणभुशुंडीपरिघाश्चायुधानि यस्याः सा । अनेनास्याः काल्याः दशभुजात्वं सूचितम् । तदुक्तं वैकृतिकरहस्ये । " योगनिद्रा हरेरुक्ता महाकाली तमोगुणा । मधुकैटभनाशार्थं यां तुष्टावांबुजासनः ॥ दशवक्त्रा दशभुजा दशपादांजनप्रभा । विशालया राजमाना त्रिंशल्लोचनमालया ॥ स्फुरद्दशनदंष्ट्रा सा भीमरूपापि भूमिप । रूपसौभाग्यकांतीनां सा प्रतिष्ठा महाश्रियाम् ॥ खड्गबाणगदाशूलशंखचक्रभुशुंडिभृत् । परिघं कार्मुकं शीर्षं निश्चोतद्रुधिरं दधौ ॥ एषा सा वैष्णवी माया महाकाली दुरत्यया । आराधिता वशीकुर्यात्पूजाकर्तुश्चराचरम् ॥ " इति । " उड्डीयोड्डीय च प्राप्य नदंती दशकार्त्रिका । क्रमते वा नतांगी वा सा भुशुंडी निगद्यते ॥ " परिघो लोहबद्धो लगुडः ॥ ६१ ॥ सौम्या अक्रूरा भक्तेषु असौम्येतरा दैत्येषु अशेषसौम्येभ्यः सकलसुंदरेभ्यस्तु अतिसुन्दरीत्यर्थः । परेति । इदमुपलक्षणं पश्यंतीमध्यमावै-

श्वरीणां परा बीजरूपा च । पराणामुत्कृष्टानां परमा प्रधानं त्वमेव यतस्त्वं परमेश्वरी ॥६२॥ सत् ब्रह्मवर्गः असत् जडवर्गः तस्य सर्वस्य या शक्तिः सा यदा त्वं तदा त्वं कथं स्तव्येत्यर्थपदपदार्थस्तोत्रस्तुत्यतच्छक्तिस्तुतीनां त्वत्तोऽन्यत्वाभाववद्भेदनिबंधनात्स्तुतिः कथं स्यादिति भावः ॥६३॥ स्तुत्यत्वाभावमेवाह । पुनः यया ब्रह्मविष्णुरुद्रात्मना जगत्सृष्टिस्थितिलयकर्तापि निद्रावशं नीतः प्रापित इत्यर्थः । पाता पालकः अत्ति स्वस्मिन् लयं प्रापयाति । तमोगुणप्रधानमायासंबंधादेव भगवतः सर्वोपसंहारेण स्वस्वरूपेण स्थानमिति भावः ॥ ६४ ॥ अहं ब्रह्मा शरीरग्रहणं कारिताः केवलमायिकत्वाच्छरीरिण इति भावः ॥ ६५ ॥ सानंतरोक्तस्वभावा त्वमित्थमेवंविधैरु-

यच्च किंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ॥ तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ॥ ६३ ॥ यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ॥ सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥६४॥ विष्णुः शरीरग्रहणमहमीशान एव च ॥ कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत् ॥ ६५ ॥ सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ॥ मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ ६६ ॥ प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ॥ बोधश्च क्रियतामस्य हंतुमेतौ महासुरौ ॥ ६७ ॥ ऋषिरुवाच ॥ एवं स्तुता तदा देवी तामसी तत्र वेधसा ॥ विष्णोः प्रबोधनार्थाय निहंतुं मधुकैटभौ ॥ ६८ ॥

दारैः रक्षासाधारणैः स्वैः प्रभावैर्माहात्म्यैः संस्तुता एतौ मोहय इत्यर्थः । मोहश्च भगवंतं प्रति वरदातृरूपः ॥ ६६ ॥ प्रबोधं जागरणं पालनोद्यमरूपम् । हंतुं बोधः प्रवृत्तिः । प्रवृत्तिस्वभावत्वात्तवेति भावः । ब्रह्मणः स्रष्टृत्वेन "विषवृक्षोऽपि" इति न्यायेन न हनने प्रवृत्तिः । विष्णूपरि यद्यपि पालनप्राधान्यं तथापि सतां पालनस्य दुष्टहननं विना तत्संभवात् । पालनानुगुणेनैव कदाचिद्धंतृत्वमपि तस्य नानुपपन्नम् । एवं भगवत्कृतेऽपि मधुकैटभवधे माणवककर्तृकाध्ययने आचार्येण कार्यमाणे कारितैरिव तत्सामर्थ्याचरणेन भगवतस्तद्वधविषयकप्रवृत्तिसंपादकत्वेन प्रेरकतया तद्धंतृत्वं देव्या अपीति बोध्यम् ॥ ६७ ॥ ऋषिरुवाच ॥ एवं स्तुतेति ॥ तामसी

आवरकत्वेन तमःप्रधाना इयं शक्तिः मधुकैटभौ एतौ निहंतुं चेत्यर्थः ॥ ६८ ॥ नेत्रास्येति ॥ विष्णोरित्यादि । उरो वक्षः प्राण्यंगत्वेऽपि नैकवच्छांदसत्वात् । अव्यक्तादीश्वरात् जन्म प्रादुर्भावो यस्य तस्य ब्रह्मणः दर्शने चक्षुर्विषये तस्थावित्यन्वयः ॥ ६९ ॥ उत्तस्थौ चेति ॥ तया मुक्तस्त्यक्त इत्यर्थः । अहिशयनात् शेषशयनात् सः तौ ददृशे । अर्थात्तावपि तं ददृशाते इति कर्मव्यतिहारे आत्मनेपदम् ॥ ७० ॥ तौ विशेषयति–मधुकैटभाविति ॥ आद्यपादे नवाक्षरत्वं छांदसत्वात् । वीर्यमुत्साहः पराक्रमः शक्त्यतिशयः अत्तुं ग्रसितुम् । अनेन प्रवृद्धस्य तमसोऽभिभावकत्वं सूचितम् ॥ ७१ ॥ ७२ ॥ तावपीति ॥ वर इष्टोऽर्थः । व्रियतां गृह्यताम्

नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः ॥ निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ॥ ६९ ॥ उत्तस्थौ च जगन्नाथस्तया मुक्तो जनार्दनः ॥ एकार्णवे हि शयनात्ततः स ददृशे च तौ ॥ ७० ॥ मधुकैटभौ दुरात्मानावतिवीर्यपराक्रमौ ॥ क्रोधरक्तेक्षणावत्तुं ब्रह्माणं जनितोद्यमौ ॥ ७१ ॥ समुत्थाय ततस्ताभ्यां युयुधे भगवान् हरिः ॥ पंच वर्षसहस्राणि बाहुप्रहरणो विभुः ॥ ७२ ॥ तावप्यतिबलोन्मत्तौ महामायाविमोहितौ ॥ उक्तवंतौ वरोऽस्मत्तो व्रियतामिति केशवम् ॥ ७३ ॥ श्रीभगवानुवाच ॥ भवेतामद्य मे तुष्टौ मम वध्यावुभावपि ॥ किमन्येन वरेणात्र एतावद्धि वृतं मया ॥ ७४ ॥ ऋषिरुवाच ॥ वंचिताभ्यामिति तदा सर्वमापोमयं जगत् ॥ विलोक्य ताभ्यां गदितो भगवान् कमलेक्षणः ॥ ७५ ॥ आवां जहि न यत्रोर्वी सलिलेन परिप्लुता ॥ ७६ ॥

॥ ७३ ॥ श्रीभगवानुवाच ॥ भवेतामिति ॥ यत्र यदि तदेव पूरणीयं यदि तुष्टौ तदा तर्हि वध्यौ भवेतामित्यन्वयः । वृतमिति नपुंसके भावे क्तः । ममेति कर्तुः शेषत्वविवक्षायां षष्ठी ॥ ७४ ॥ ऋषिरुवाच ॥ वंचिताभ्यामिति ॥ तदा तस्मिन् समये इति एवं वरप्रार्थनया वंचिताभ्यां भगवती कृतमोहवशात् सर्वं जगत् आपोमयं विलोक्य ताभ्यां भगवान् गदित इत्यर्थः । आपोमय इत्यत्राप्शब्दसमानादाप्प्रकृतिकादसुन्नंतादापः शब्दान्मयट् । " आपोमयमिदं सर्वमापो मूर्तिः शरीरिणाम् । " इतिवत् ॥ ७५ ॥ किं गदितं तत्राह–आवामिति ॥ न यत्रोर्वी यत्र वा न सलिलेन परिप्लुता तत्रावां जहीत्यर्थः ॥ ७६ ॥

ऋषिरुवाच ॥ तथेति ॥ पूर्ववर्तमानकथाभिप्रायेण ऋषिरुवाचेत्युक्तिः । अत्र भूय उपहाराभिप्रायेण वस्तुतः सप्तशतीत्वव्यवहारप्रयोजकसप्तशतमन्त्रसंख्यापूरणीयतया उक्तिः । यथा चैतत्तथा कात्यायनीसंमतिपूर्वकं सर्वांते उपपादयिष्यामः । तत्र न यत्रोर्वीत्येवं संपादयंस्तयोः शिरसी जघने उपस्थादूर्ध्वं नाभेरधोभागे कृत्वा चक्रेण छिन्नवान् एतेन भगवद्देहस्य शुद्धमायिकत्वेनापांचभौतिकतया जघने मारणेऽपि सलिलप्लुतत्वाभावे विशिष्टोर्व्यां प्रार्थितस्य वधस्य धृतिरिति परास्तम् ॥७७॥ उपसंहरति–एवमेषेति ॥ समुत्पन्ना प्रादुर्भूता । अस्या देव्या इति अधिकरणे षष्ठी । अस्यास्तामस्याः मूलभूतायाः त्रिगुणा महालक्ष्मीः तस्या इत्यर्थः । अत एव तुशब्दसंगतिः । भूयः प्रभावं पुनः प्रादुर्भावं भूय इत्युक्तिस्तु तामस्यास्तस्या अंशाभेदात्पूर्वोक्तप्रभावोऽपि तस्या एव ध्वनयितुम् । यद्वा । प्राधानिकरहस्योक्तआद्यचतुर्भुजप्रादुर्भावापेक्षया मध्यमचरित्रवक्ष्यमाणाष्टादशभुजाप्रादुर्भावस्य पुनस्त्वमादाय तदुक्तिः । तदुक्तं लक्ष्मीतंत्रे । " योगनिद्रा हरेरुक्ता या सा देवी दुरत्यया । महाका-

**ऋषिरुवाच ॥ तथेत्युक्त्वा भगवता शंखचक्रगदाभृता ॥ कृत्वा चक्रेण वै छिन्ने जघने शिरसी तयोः ॥ ७७ ॥ एवमेषा समुत्पन्ना ब्रह्मणा संस्तुता स्वयम् ॥ प्रभावमस्या देव्यास्तु भूयः शृणु वदामि ते ॥७८॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये मधुकैटभवधो नाम प्रथमोऽध्यायः ॥ १ ॥**

ल्यास्तनुं विद्धि तां मां देवीं सनातनीम् ॥ मधुकैटभनाशार्थमहितौ च तदा तया । जघ्नाते वरलाभेन देवदेवेन विष्णुना ॥ एषा सा वैष्णवी माया महाकाली दुरत्यया । स्तुत्या वशीकृताः कुर्यादिशः स्तोतुश्चराचरम् ॥" इति । स्तुता विश्वेश्वर्यादिसूक्तरूपया । तदुक्तम् । "विश्वेश्वर्यादिकं सूक्तं दृष्टं तद्ब्रह्मणा तदा । स्तुतये योगनिद्रायाः समं देव्या पुरंदरः ॥ अस्या देव्याः समुत्पत्तिश्चरितं स्तोत्रमित्यपि । हिताय सर्वभूतानां धार्यते ब्रह्मवादिभिः ॥ " इति । विश्वेश्वर्यादिसूक्तमेव रात्रिसूक्तमिति व्यवह्रियते । " कालरात्रिर्महारात्रिः " इति । तत्र रात्रिपदाभ्यासादिति बोध्यम् । विश्वेश्वरीपदे नोपक्रमाद्विश्वेश्वरीसूक्तमपि ॥ ७८ ॥ समाप्तौ सावर्णेः कः प्रकाशो यत्र-तादृशे मन्वंतरे तद्वर्णने इत्यर्थः ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृतसप्तशतीव्याख्याने प्रथमोऽध्यायः ॥ १ ॥

भूयः श्रृण्वित्युक्तं तत्रेतिहासमाह–ऋषिरुवाच ॥ देवासुरमिति ॥ असुराणामधिपे महिषे च सति पुनर्देवानामधिपे पुरंदरे इंद्रे सति देवा असुराश्च प्रहर्तारो यत्र तादृशं युद्धमब्दशतमासीदित्यर्थः । देवासुरमित्यत्रार्शआदित्वादच् । "रंभासुरतपस्यया प्रसन्नस्य शिवस्यांशोऽयं तत्सुतो महिषः स च तपसा देवीनिकटे मम सायुज्यं भवत्विति वरं प्रार्थितवान्" इति कालीपुराणे स्पष्टम् ॥ १ ॥ तत्रेति ॥ इंद्रः सुरराट् ॥ २ ॥ पद्मयोनिं ब्रह्माणं प्रजापतिमिति तस्य विशेषणम् । ब्रह्मणः प्रजास्रष्टृत्वेन सिद्धसंबंधत्वात् । आदौ देवानां तत्र गमनम् । ततः पालनसंहारयोः शिवविष्ण्वोरेवाधिकारात्सब्रह्मणां तयोः समीपे गमनम् ॥ ३ ॥ यथावृत्तमिति ॥

ऋषिरुवाच ॥ देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा ॥ महिषेऽसुराणामधिपे देवानां च पुरंदरे ॥ १ ॥ तत्रासुरैर्महावीर्यैर्देवसैन्यं पराजितम् ॥ जित्वा च सकलान्देवानिंद्रोऽभून्महिषासुरः ॥ २ ॥ ततः पराजिता देवाः पद्मयोनिं प्रजापतिम् ॥ पुरस्कृत्य गतास्तत्र यत्रेशगरुडध्वजौ ॥ ३ ॥ यथावृत्तं तयोस्तद्वन्महिषासुरचेष्टितम् ॥ त्रिदशाः कथयामासुर्देवाभिभवविस्तरम् ॥ ४ ॥ सूर्येंद्राग्न्यनिलेंदूनां यमस्य वरुणस्य च ॥ अन्येषां चाधिकारान्स स्वयमेवाधितिष्ठति ॥ ५ ॥ स्वर्गान्निराकृताः सर्वे तेन देवगणा भुवि ॥ विचरंति यथा मर्त्या महिषेण दुरात्मना ॥६॥ एतद्वः कथितं सर्वममरारिविचेष्टितम् ॥ शरणं वः प्रपन्नाः स्मो वधस्तस्य विचिंत्यताम् ॥ ७ ॥ इत्थं निशम्य देवानां वचांसि मधुसूदनः ॥ चकार कोपं शंभुश्च भ्रुकुटीकुटिलाननौ ॥ ८ ॥

देवानामभिभवस्य विस्तरः प्रपंचो यत्रेति चेष्टितविशेषणम् ॥ ४ ॥ सूर्येंद्रेति ॥ सः स्वयमित्यत्र "एतत्तदोः०" इति सुलोपः । स्वयमिति द्विसकारपाठस्तु "अनचि च" इति द्वित्वेन वोध्यः ॥ ५ ॥ स्वर्गादिति ॥ निराकृता निःसारिताः ॥ ६ ॥ एतद्व इति ॥ वः इति द्वयोर्बहुवचनम् । गौरवात् च परं शरणं प्रपन्नाः आगताः स्मो भवामः ॥ ७ ॥ इत्थमिति ॥ भ्रुवोः कुटी कौटिल्यं तेन कुटिले भुग्ने आनने ययोस्तौ । भ्रूशब्दस्य पृषोदरादित्वाद्ध्रस्वः कुटेरिक्प्रत्य-

यांतात् " कृदिकारात्० " इति ङीष् । ब्रह्मणः कोपेऽपि रजआधिक्येन शिवस्य तमोगुणप्राधान्येन कोपेऽपि तमोगुणस्याधिक्येन विष्णुकोपस्य पालकमूलत्वेन सत्त्वाधिक्यवत्तया त्रिगुणा एषा इति ध्वन्यते । अत एवोक्तं वैकृतिकरहस्ये । " सर्वदेवशरीरेभ्यो याविर्भूतामितप्रभा । त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्दिनी ॥ " तत्रापि रजःसत्त्वयोराधिक्यं देवानां रजःसत्त्वमयत्वात् ॥ ८ ॥ तत इति ॥ द्वितीयं तत इति प्रसिद्धादित्यर्थकं वदनादित्यस्य विशेषणम् ॥ ९ ॥ अन्येषां चेति ॥ कुपितानामिति शेषः । यत्तेजः निर्गतं तच्च ब्रह्मादीनां तेजश्च ऐक्यमेकत्वं समगच्छत । छांदसस्तङ् ॥ १० ॥ अतीवेति ॥ तत्रेत्यस्य काले इति देशे इति वा विशेषः ॥ ११ ॥ अतुलमिति ॥ तत् ततः तत्र पुराणांतरप्रसिद्धे कात्यायनाश्रमे तत्तेजः एकस्थं सन्नारी अभूत् । त्विषा दीप्त्या ॥ १२ ॥ तेजोविभागेनांगविभागमाह–यदिति ॥ शंभोः श्वेतांगतया तत्तेज आयातं मुखं श्वेतमित्यर्थः । विष्णोर्नीलवर्णतया बाहवोऽष्टादश नीलाः ॥ १३ ॥ सौम्येनेति ॥ सोमसंबंधिनेत्यर्थः । छांदसत्वादिदमर्थेऽपि यण् । अत एव श्वेतस्तनी ऐंद्रेण मध्यं रक्तं जंघोरू इत्यत्र पूर्वनिपातैकवद्भावविधेरनित्यत्वान्न दोषः । भिन्ने पदे वा । जंघे ऊरू च वारुणेनेत्यन्वयः । भुवः पृथ्व्याः नितंबः कटिपश्चाद्भागः ॥ १४ ॥ ब्रह्मण इति ॥ अत एव पादौ रक्तौ । एतदुक्तं वैकृतिकरहस्ये । " श्वेतानना नीलभुजा सुश्वेतस्तनमंडला । रक्तमध्या रक्तपादा नीलजंघोरुरुन्मदा ॥ सुचित्रजघना चित्रमाल्यांबरविभूषणा । चित्रानुलेपना कांतिरूपसौभाग्यशालिनी ॥ " इति । एवं च रूपेणापि

ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः ॥ निश्चक्राम महत्तेजो ब्रह्मणः शंकरस्य च ॥९॥ अन्येषां चैव देवानां शक्रादीनां शरीरतः ॥
निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत ॥ १० ॥ अतीव तेजसः कूटं ज्वलंतमिव पर्वतम् ॥ ददृशुस्तेऽसुरास्तत्र ज्वालाव्याप्तदिगंतरम्
॥ ११ ॥ अतुलं तत्र तत्तेजः सर्वदेवशरीरजम् ॥ एकस्थं तदभून्नारी व्याप्तलोकत्रयं त्विषा ॥ १२ ॥ यदभूच्छांभवं तेजस्तेनाजायत
तन्मुखम् ॥ याम्येन चाभवन्केशा बाहवो विष्णुतेजसा ॥ १३ ॥ सौम्येन स्तनयोर्युग्मं मध्यं चैंद्रेण चाभवत् ॥ वारुणेन च जंघोरू
नितंबस्तेजसा भुवः ॥ १४ ॥ ब्रह्मणस्तेजसा पादौ तदंगुल्योऽर्कतेजसा ॥ वसूनां च करांगुल्यः कौबेरेण च नासिका ॥ १५ ॥

त्रिगुणत्वं सूचितम् । स्वस्य चित्रत्वात् चित्रमाल्यादिधारणम् । वसूनामित्यस्य तेजसेति शेषः । एवमन्यत्रापि ॥ १५ ॥ तस्या इति ॥ प्राजापत्येन दक्षादितेजसा तेन ब्रह्मणस्तेजसा पादावित्यनेन न विरोधः । पावकोऽग्निः ॥ १६ ॥ भ्रुवौ चेति ॥ संध्ययोस्तेजः भ्रुवावभूतामित्यन्वयः । करणस्यैव कर्तृत्वविवक्षा । " पुंनपुंसकयोः कर्णः श्रवणं श्रुतौ । " इति हेममाला । अन्येषां च देवानां संबंधितेजसां शिवा चंडी संभवः कार्यं वेत्यर्थः । एकीभावः एव प्रसिद्धौ ॥ १७ ॥ तत इति ॥ तेजोराशिसमुद्भवामिति सापेक्षत्वेऽपि गमकत्वात्समासः । मुदं हर्षं ब्रह्मादिषु विद्यमानस्वतेजसैव भगवती आविर्भूतेति तात्पर्यम् । एवमायुधदानमपि बोध्यम् ॥ १८ ॥

तस्यास्तु दंताः संभूताः प्राजापत्येन तेजसा ॥ नयनत्रितयं जज्ञे तथा पावकतेजसा ॥ १६॥ भ्रुवौ च संध्ययोस्तेजः श्रवणावनिलस्य च ॥ अन्येषां चैव देवानां संभवस्तेजसां शिवा ॥ १७ ॥ ततः समस्तदेवानां तेजोराशिसमुद्भवाम् ॥ तां विलोक्य मुदं प्रापुरमरा महिषार्दिताः ॥ १८ ॥ शूलं शूलाद्विनिष्कृष्य ददौ तस्यै पिनाकधृक् ॥ चक्रं च दत्तवान्कृष्णः समुत्पाद्य स्वचक्रतः ॥ १९ ॥ शंखं च वरुणः शक्तिं ददौ तस्यै हुताशनः ॥ मारुतो दत्तवांश्चापं बाणपूर्णे तथेषुधी ॥२०॥ वज्रमिंद्रः समुत्पाद्य कुलिशादमराधिपः ॥ ददौ तस्यै सहस्राक्षो घंटामैरावताद्गजात् ॥२१॥ कालदंडाद्यमो दंडं पाशं चांबुपतिर्ददौ ॥ प्रजापतिश्चाक्षमालां ददौ ब्रह्मा कमंडलुम् ॥ २२ ॥

शूलमिति ॥ विनिष्कृष्य आकृष्येत्यर्थः । समुत्पाद्य जनयित्वेत्यर्थः । पदेष्वैतस्य रूपम् । एवमग्रेऽपि । अत्र चक्रं चेति चाददात् ॥ १९ ॥ शंखं चेति ॥ वरुणाच्छंखस्य अग्नेः शक्तेः वायोश्चापबाणयोर्लाभ इत्यर्थः । शंखं चेति चकारो वक्ष्यमाणपाशसमुच्चये इत्यर्थे वा ॥ २० ॥ वज्रमिति ॥ देयभेदादेकस्यैव दातुः क्वचित्पुनरुपादानेऽपि न दोषः ॥ २१ ॥ कालेति ॥ उत्पाद्येति शेषः । प्रजानां पतिर्ब्रह्मा अक्षमालां कमंडलुं च ददावित्यन्वयः । ब्रह्माक्षमालां कमंडलुमिति वामनपुराणात्

॥ २२ ॥ समस्तेति ॥ कालस्तदभिमानिनी देवता तस्या इति संबंधत्वेन विवक्षायां षष्ठी ॥ २३ ॥ क्षीरोदश्चेति ॥ अंगुलीयरत्नदानांतं क्षीरोदः कर्ता ॥ २४ ॥ विश्वकर्मणः परश्वस्त्रकवचदातृत्वं चूडामण्यादिकवचदानांतं विश्वकर्मकर्तृत्वमित्यन्वयः । तन्मते अर्द्धचंद्रशब्देन तदाकारो ललाटभूषणविशेषः ॥ २५ ॥ २६ ॥ अम्लानेत्यारभ्य पंकजदानांतं जलधिः कर्ता । तत्र पंकजं हस्ते । रत्नसिंहयोर्दाने हिमवान् । अददादिति " दद दाने " इत्यस्य लङि रूपम् । छांदसत्वात्परस्मैपदम् ॥ २७ ॥ २८ ॥ ददाविति ॥ अनेनाष्टादशभुजा सहस्रभुजा चैषेति सूचितम् । तदुक्तं वैकृतिकरहस्ये । " अष्टादशभुजा पूज्या सा सहस्रभुजा सती । " अष्टादश-

समस्तरोमकूपेषु निजरश्मीन्दिवाकरः ॥ कालश्च दत्तवान्खड्गं तस्याश्चर्म च निर्मलम् ॥ २३ ॥ क्षीरोदश्चामलं हारमजरे च तथांबरे ॥ चूडामणिं तथा दिव्यं कुंडले कटकानि च ॥२४॥ अर्धचंद्रं तथा शुभ्रं केयूरान्सर्वबाहुषु ॥ नूपुरौ विमलौ तद्वद्ग्रैवेयकमनुत्तमम्॥२५॥ अंगुलीयकरत्नानि समस्तास्वंगुलीषु च ॥ विश्वकर्मा ददौ तस्यै परशुं चातिनिर्मलम् ॥२६॥ अस्त्राण्यनेकरूपाणि तथाभेद्यं च दंश-नम् ॥ अम्लानपंकजां मालां शिरस्युरसि चापराम् ॥२७॥ अददज्जलधिस्तस्यै पंकजं चातिशोभनम् ॥ हिमवान्वाहनं सिंहं रत्नानि विविधानि च ॥ २८ ॥ ददावशून्यं सुरया पानपात्रं धनाधिपः ॥ शेषश्च सर्वनागेशो महामणिविभूषितम् ॥ २९ ॥ नागहारं ददौ तस्यै धत्ते यः पृथिवीमिमाम् ॥ अन्यैरपि सुरैर्देवी भूषणैरायुधैस्तथा ॥ ३० ॥

भुजधार्याणां विशिष्योक्तेः । सामान्यतः अन्यैरपि देवैरायुधैरित्युक्तेश्चेति भावः । " आयुधान्यत्र वक्ष्यंते दक्षिणाधःकरक्रमात् । अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा ॥ चक्रं त्रिशूलं परशुः शंखो घंटा च पाशकः। शक्तिर्दंडश्चर्म चापं पानपात्रं कमंडलुः ॥ अलंकृतभुजामेभिरायुधैः कमलासनाम् । सर्वदेवमयीमीशां महालक्ष्मीमिमां नृप ॥ पूजयन् सर्वलोकानां स देवानां प्रभुर्भवेत् । " इति । एवंस्वरूपायुधैरस्या ब्राह्मीत्वं वैष्णवीत्वं च त्रिगुणात्वश्च सर्वमूलभूतशक्तेरयं प्रादुर्भावस्तत्समान

इति च सूचितम् । यद्यप्यत्र ब्रह्मादीनामिंद्रादीनां च शरीरान्निष्क्रांततेजो देवीविग्रहरूपेणाभिव्यक्तमासीत् आयुधानि च देवैः स्वस्वशूलादिभ्यो विनिर्गमय्य दत्तानि इत्येवोक्तम् । तथापि देवीशक्त्यंशा एव तत्तद्देवपालनीयैकदेशे पालनशक्तित्वेन ये देव्या निवेशितास्ते एव महिषवधे सर्वलोकरक्षणाय पुनरेकीभूय देवीरूपं प्राप्ताः । एवं तदायुधाः निजशक्त्यंशा अपीति बोध्यम् । " अहं विभूत्या बहुभिः " इत्यादितृतीयचरितगतवचनसमूहात् लक्ष्मीतंत्रेऽपि शक्रं पति लक्ष्मीवचनानि । " महालक्ष्मीरहं शक्र पुनः स्वायंभुवेंऽतरे । हिताय सर्वदेवानां जाता महिषमर्दिनी ॥ मदीयाः शक्तिलेशा ये तत्र देवशरीरगाः । धृतं मया तैः संभूतै रूपं परमशोभनम् ॥ आयुधानि च देवानां यानि यानि सुरेश्वर । मच्छक्तयस्तदाकाराण्यायुधानि ममाभवन् ॥ " इति ॥ २९ ॥ ३० ॥ संमानितेति ॥ साट्टहासमिति नादक्रियाविशेष-

संमानिता ननादोच्चैः साट्टहासं मुहुर्मुहुः ॥ तस्या नादेन घोरेण कृत्स्नमापूरितं नभः ॥ ३१ ॥ अमायतातिमहता प्रतिशब्दो महानभूत् ॥ चुक्षुभुः सकला लोकाः समुद्राश्च चकंपिरे ॥ ३२ ॥ चचाल वसुधा चेलुः सकलाश्च महीधराः ॥ जयेति देवाश्च मुदा तामूचुः सिंहवाहिनीम् ॥ ३३ ॥ तुष्टुवुर्मुनयश्चैनां भक्तिनम्रात्ममूर्तयः ॥ दृष्ट्वा समस्तं संक्षुब्धं त्रैलोक्यममरारयः ॥ ३४ ॥ सन्नद्धाखिलसैन्यास्ते समुत्तस्थुरुदायुधाः ॥ आः किमेतदिति क्रोधादाभाष्य महिषासुरः ॥ ३५ ॥

णम् । साट्टहासोऽन्यर्थहासः । नभ इति भुवर्लोकलक्षणम् ॥३१॥ अमायतेति ॥ " मा माने " दैवादिकण्यन्ते नञ्समासः । तेन असंभवतेत्यर्थः । अस्य नमसीत्यादिः ॥ ३२ ॥ चचालेति ॥ महीधराः पर्वताः ॥३३॥ तुष्टुवुरिति ॥ भक्त्या नम्रः अपकृष्टत्वज्ञानवानात्मा शरीरं येषां संक्षुब्धमाकुलं यातमिति शेषः । अमरारयश्च संक्षुब्धा इत्यर्थः ॥३४॥ सन्नद्धेति ॥ युद्धाय सज्जानि धृतसन्नाहानि अखिलसैन्यानि येषाम् । आः इति क्रोधाविष्कारे । अनेन च महिषासुरस्य तमोमयत्वमुक्तम् । दूतप्रेरणात् कस्यचित्सैनिकस्य प्रथमप्रेषणाच्च स्वयमेव क्रोधजमाह । न प्रथममेव युद्धार्थं धावमानाच्च रूपेणापि तमोमयत्वाच्च । अत एव रजःसत्त्वाधिकदेव्यास्तद्धंतृत्वम् ॥ ३५ ॥

अभ्यधावतेति ॥ त्वरितेत ॥३६॥ देवीं विशेषयति सार्धेन–पादेति ॥ धनुषो ज्यायाश्च निःस्वनेन धनुषः झंकारः ज्यायाष्टंकारः ॥३७॥ दिश इति ॥ समंतात्सर्वतः ॥३८॥ शस्त्रास्त्रैरिति ॥ शस्त्रं केवलं मंत्रयुक्तं तदस्त्रम् ॥ ३९ ॥ युयुधे इति ॥ अन्यैः प्रधानदैत्यैः सहितः चामराख्यः चिक्षुराख्यश्च रथनागहयपादातरूपचतुरंगसेनायुतो युयुधे इत्यर्थः ॥ ४० ॥ अयुद्ध्यतेति ॥ अयुतानामिति नियुतैरिति च तद्गतबहुत्वविवक्षया बहुवचनम् । एवमग्रेऽपि । "एकं दशशतं चैव सहस्रमयुतं तथा । लक्षं

अभ्यधावत तं शब्दमशेषैरसुरैर्वृतः ॥ स ददर्श ततो देवीं व्याप्तलोकत्रयां त्विषा ॥३६॥ पादाक्रांत्यानतभुवं किरीटोल्लिखितांबराम् ॥ क्षोभिताशेषपातालां धनुर्ज्यानिःस्वनेन ताम् ॥ ३७ ॥ दिशो भुजसहस्रेण समंताद्व्याप्य संस्थिताम् ॥ ततः प्रववृते युद्धं तया देव्या सुरद्विषाम् ॥ ३८ ॥ शस्त्रास्त्रैर्बहुधा मुक्तैरादीपितदिगंतरम् ॥ महिषासुरसेनानीश्चिक्षुराख्यो महासुरः ॥ ३९ ॥ युयुधे चामरश्चान्यैश्चतुरंगबलान्वितः ॥ रथानामयुतैः षड्भिरुदग्राख्यो महासुरः ॥ ४० ॥ अयुध्यतायुतानां च सहस्रेण महाहनुः ॥ पंचाशद्भिश्च नियुतैरसिलोमा महासुरः ॥ ४१ ॥ अयुतानां शतैः षड्भिर्बाष्कलो युयुधे रणे ॥ गजवाजिसहस्रौघैरनेकैः परिवारितः ॥ ४२ ॥ वृतो रथानां कोट्या च युद्धे तस्मिन्नयुध्यत ॥ बिडालाख्योऽयुतानां च पंचाशद्भिरथायुतैः ॥ ४३ ॥

च नियुतं चैव कोटिरर्बुदमेव च ॥ वृंदं खर्वो निखर्वश्च शंखपद्मौ च सागरः । अंत्यमध्यपरार्धं च दशवृद्ध्या यथाक्रमम् ॥" इति ब्रह्मांडे ॥ ४१ ॥ अयुतानामिति ॥ गजवाजीत्यतो बिडालसैन्यम् ॥ ४२ ॥ वृत इति ॥ अथ तेषां वधानंतरम् । अयुतानां पंचाशद्भिरयुतैः परिवारितो बिडालनामा तत्र संयुगे युयुधे इत्युत्तरश्लोकेनान्वयः । "दुर्धरो दुर्मुखश्चैव बिडालनयनस्तथा ।" इति वामनपुराणेऽपि । बिडालनयनशब्दो योगरूढो न केवलं यौगिकः । प्रकृते च "नामैकदेशे नामग्रहणम्" अत एव बिडालस्यासिनेति वक्ष्यमाणं संगच्छते ॥ ४३ ॥

युयुधे इति ॥ स्पष्टम् ॥ ४४ ॥ युयुधुरिति ॥ अस्य पूर्वेणान्वयः । अनुदात्तेत्त्वलक्षणतङो नित्यत्वात्परस्मैपदम् उत्तरान्वयि ॥ ४५ ॥ हयानां चेति ॥ रथदंतिहयानां प्रत्येकं कोटिकोटिसहस्रसंख्यायुतो महिषस्तत्राभूदित्यर्थः । उत्तरान्वयि । भिंदि इति दंत्यांतः ॥ ४६ ॥ युयुधुरिति ॥ केचिद्दैत्या इति शेषः । अपरे इत्युत्तरान्वयि ॥ ४७ ॥ देवीमिति ॥ अपरे तु ते प्रसिद्धदैत्या इत्यर्थः । " प्रोपाभ्याम्० " इत्यात्मनेपदं न । छांदसत्वात् ॥ ४८ ॥ लीलयैव आयासरहितानना ॥ ४९ ॥

युयुधे संयुगे तत्र रथानां परिवारितः ॥ अन्ये च तत्रायुतशो रथनागहयैर्वृताः॥४४॥ युयुधुः संयुगे देव्या सह तत्र महासुराः॥ कोटिकोटिसहस्रैस्तु रथानां दन्तिनां तथा॥४५॥हयानां च वृतो युद्धे तत्राभून्महिषासुरः॥ तोमरैर्भिंदिपालैश्च शक्तिभिर्मुसलैस्तथा॥४६॥ युयुधुः संयुगे देव्याः खड्गैः परशुपट्टिशैः ॥ केचिच्च चिक्षिपुः शक्तीः केचित्पाशांस्तथापरे ॥ ४७ ॥ देवीं खड्गप्रहारैस्तु ते तां हंतुं प्रचक्रमुः ॥ सापि देवी ततस्तानि शस्त्राण्यस्त्राणि चण्डिका ॥ ४८ ॥ लीलयैव प्रचिच्छेद निजशस्त्रास्त्रवर्षिणी ॥ अनायासानना देवी स्तूयमाना सुरर्षिभिः ॥ ४९ ॥ मुमोचासुरदेहेषु शस्त्राण्यस्त्राणि चेश्वरी ॥ सोऽपि क्रुद्धो धुतसटो देव्या वाहनकेसरी ॥ ५० ॥ चचारासुरसैन्येषु वनेष्विव हुताशनः ॥ निःश्वासान्मुमुचे यांश्च युध्यमाना रणेऽम्बिका ॥ ५१ ॥ त एव सद्यः संभूता गणाः शतसहस्रशः॥ युयुधुस्ते परशुभिर्भिंदिपालासिपट्टिशैः ॥५२॥ नाशयंतो सुरगणान्देवीशक्त्युपबृंहिताः ॥ अवादयंत पटहान्गणाः शंखांस्तथापरे ॥५३॥

मुमोचेति ॥ उत्तरार्धमुत्तरान्वयि । धुताः कंपिताः ॥ ५० ॥ चचारेति ॥ उत्तरार्धमुत्तरान्वयि । यान् यावतः ॥ ५१ ॥ त एवेति ॥ तावंत एवेत्यर्थः । एकैकनिःश्वासादेकैकगणः संभूत इत्यर्थः । ते गणाः ॥ ५२ ॥ नाशयंत इति ॥ देवीप्रभावेनाप्यायिताः अवादयंत । वादितवंत इत्यर्थः । गणाः केचिदिति शेषः ॥ ५३ ॥

मृदंगाश्चेति ॥ युद्धमेव महोत्सवो वीराणां हर्षत्वात् । शक्तीनां वृष्टिभिर्वर्षैः इत्यर्थः ॥ ५४ ॥ खड्गेति ॥ स्पष्टम् ॥ ५५ ॥ असुराननिति ॥ अकर्षयदिति कृषेश्चौरादि-काल्लङ् । अपर इत्युत्तरान्वयि ॥ ५६ ॥ विपोथिता इति ॥ अपरे गदया विपोथिता आमर्दिताः । निपातेन निपतनेन भुवि शेरत इत्यन्वयः । वेमुरिति छांदसम् ॥ ५७ ॥ केचिदिति ॥ शूलेन वक्षसि भिन्नाः भूमौ निपतिताः निपेतुरित्यन्वयः । उत्तरार्धमुत्तरान्वयि ॥ ५८ ॥ सेनेति ॥ सेनामनु पश्चात्कुर्वंति सेनाग्रगाः

मृदंगांश्च तथैवान्ये तस्मिन्युद्धमहोत्सवे ॥ ततो देवी त्रिशूलेन गदया शक्तिऋष्टिभिः ॥५४॥ खड्गादिभिश्च शतशो निजघान महा-
सुरान् ॥ पातयामास चैवान्यान्घंटास्वनविमोहितान् ॥ ५५ ॥ असुरान्भुवि पाशेन बद्ध्वा चान्यानकर्षयत् ॥ केचिद्द्विधाकृतास्तीक्ष्णैः
खड्गपातैस्तथापरे ॥ ५६ ॥ विपोथिता निपातेन गदया भुवि शेरते ॥ वेमुश्च केचिद्रुधिरं मुसलेन भृशं हताः ॥५७॥ केचिन्निपतिता
भूमौ भिन्ना शूलेन वक्षसि ॥ निराकृताः शरौघेण कृताः केचिद्रणाजिरे ॥५८॥ सेनानुकारिणः प्राणान्मुमुचुस्त्रिदशार्दनाः ॥ केषांचि-
द्बाहवश्छिन्नाश्छिन्नग्रीवास्तथापरे ॥५९॥ शिरांसि पेतुरन्येषामन्ये मध्ये विदारिताः ॥ विच्छिन्नजंघास्त्वपरे पेतुरुर्व्यां महासुराः ॥६०॥
एकबाह्वक्षिचरणाः केचिद्देव्या द्विधाकृताः ॥ छिन्नेऽपि चान्ये शिरसि पतिताः पुनरुत्थिताः ॥६१॥ कबंधा युयुधुर्देव्या गृहीतपरमायुधाः ॥
ननृतुश्चापरे तत्र युद्धे तूर्यलयाश्रिताः ॥६२॥ कबंधाश्छिन्नशिरसः खड्गशक्त्यृष्टिपाणयः ॥ तिष्ठ तिष्ठेति भाषंतो देवीमन्ये महासुराः ॥६३॥

शरौघव्याप्तत्वात् । सेनाः शल्लक्यस्तत्सदृशाश्च अपरे छिन्नग्रीवाः प्राणान्मुमुचुरित्यर्थः ॥ ५९ ॥ शिरांसीति ॥ छिन्नानीति शेषः ॥ ६० ॥ एकेति ॥ आशिरः पादपर्यंतं पाटिता इत्यर्थः । उत्तरार्धमुत्तरान्वयि ॥ ६१ ॥ कबंधा इति ॥ "मनुष्याणां सहस्रेषु हतेषु हतमूर्धसु । तदावेशात्कबंधः स्यादेको मूर्धा क्रियान्वितः ॥" इति लक्षिताः । अपरे कबंधाश्च युयुधुः ॥ ६२ ॥ कबंधा इति ॥ उभयत्रापि युयुधुरिति शेषः । छिन्नशिरस इति स्वरूपकथनं छिन्नानि शिरांसि यैरिति । ऋष्टयः

उभयतोधाराः खड्गाः । मार्षंत इति छांदसः ॥६३॥ पातितैरिति ॥ रथनागसहितैरश्वैरित्यर्थः । एवमग्रेऽपि ॥६४ ॥ शोणितौघा इति ॥ असुरसैन्यस्य मध्ये वारणासुरवाजिनां शोणितस्य ओघः प्रवाहो यासु तादृश्यो नद्यः प्रसुस्रुवुः । छांदसत्वात्समासः ॥६५॥६६॥ स चेति ॥ क्षयं निन्ये इति शेषः । तत्रोत्प्रेक्षते । अमरारीणां शरीरेभ्यो असून्विचिन्वतीव । भूते लट् । अडागमो गुणाभावश्च च्छांदसः ॥ ६७ ॥ देव्या इति ॥ चोऽप्यर्थे । तुतुषुस्तुष्टाः ॥ ६८ ॥ इति शिव० नागोजीभट्टकृते

पातितै रथनागाश्वैरसुरैश्च वसुंधरा ॥ अगम्या साभवत्तत्र यत्राभूत्स महारणः ॥ ६४ ॥ शोणितौघा महानद्यः सद्यस्तत्र विसुस्रुवुः ॥ मध्ये चासुरसैन्यस्य वारणासुरवाजिनाम् ॥६५॥ क्षणेन तन्महासैन्यमसुराणां तथाम्बिका ॥ निन्ये क्षयं यया वह्निस्तृणदारुमहाचयम् ॥ ६६ ॥ स च सिंहो महानादमुत्सृजन्धुतकेसरः ॥ शरीरेभ्योऽमरारीणामसूनिव विचिन्वति ॥ ६७ ॥ देव्या गणैश्च तैस्तत्र कृतं युद्धं तथासुरैः ॥ यथैषां तुतुषुर्देवाः पुष्पवृष्टिमुचो दिवि ॥ ६८ ॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये महिषासुरसैन्यवधो नाम द्वितीयोऽध्यायः ॥ २ ॥ ऋषिरुवाच ॥ निहन्यमानं तत्सैन्यमवलोक्य महासुरः॥ सेनानीश्चिक्षुरः कोपाद्ययौ योद्धुमथाम्बिकाम् ॥ १ ॥ स देवीं शरवर्षेण ववर्ष समरेऽसुरः ॥ यथा मेरुगिरेः श्रृंगं तोयवर्षेण तोयदः॥ २ ॥ तस्य च्छित्त्वा ततो देवी लीलयैव शरोत्करान् ॥ जघान तुरगान्बाणैर्यंतारं चैव वाजिनाम् ॥३ ॥ चिच्छेद च धनुः सद्यो ध्वजं चातिसमुच्छ्रितम् ॥ विव्याध चैव गात्रेषु च्छिन्नधन्वानमाशुगैः ॥४॥ स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ॥ अभ्यधावत तां देवीं खड्गचर्मधरोऽसुरः ॥ ५ ॥

सप्तशतीव्याख्याने द्वितीयोऽध्यायः ॥ २ ॥ ऋषिरुवाच ॥ निहन्यमानमिति ॥ १ ॥ २ ॥ तस्येति ॥ उत्करः समूहः वाजिनां यंतारं च रथं च जघानेत्यन्वयः ॥ ३ ॥ चिच्छेदेति ॥ आशुगाः बाणाः ॥ ४ ॥ ५ ॥

सिंहमिति ॥ सव्ये वामे ॥ ६ ॥ तस्या इति ॥ पफाल विशीर्णः तस्या भुजमित्यन्वयः ॥ ७ ॥ चिक्षेपेति ॥ तत् शूलं अंबराद्रविर्बिंबमिव इत्युत्तरान्वायि । तेजोभी इत्यत्र " ढ्रलोप॰ " इति दीर्घः ॥ ८ ॥ दृष्ट्वेति ॥ तत् एवं सुंदरं शूलमापतत् आगच्छत् दृष्ट्वा चेत्यर्थः । स च शतधा नीत इति शेषः ॥ ९ ॥ १० ॥ सोऽपीति ॥ हुंकारे इति ह्रस्वम् ॥ ११ ॥ १२ ॥ तत इति ॥ समुत्पत्य आप्लुत्य । गजकुंभांतरस्थित इत्येकं पदम् ॥ १३ ॥ युध्यमानाविति ॥ नागात् गजात् युयुधाते इत्यत्र

सिंहमाहत्य खड्गेन तीक्ष्णधारेण मूर्धनि ॥ आजघान भुजे सव्ये देवीमप्यतिवेगवान् ॥ ६ ॥ तस्याः खड्गो भुजं प्राप्य पफाल नृपनन्दन ॥ ततो जग्राह शूलं स कोपादरुणलोचनः ॥ ७ ॥ चिक्षेप च ततस्तत्तु भद्रकाल्यां महासुरः ॥ जाज्वल्यमानं तेजोभी रविर्बिंबमिवांबरात् ॥ ८ ॥ दृष्ट्वा तदापतच्छूलं देवी शूलममुञ्चत ॥ तच्छूलं शतधा तेन नीतः स च महासुरः ॥ ९ ॥ हते तस्मिन् महावीर्ये महिषस्य चमूपतौ ॥ आजगाम गजारूढश्चामरस्त्रिदशार्दनः ॥ १० ॥ सोऽपि शक्तिं मुमोचाथ देव्यास्तामंबिका द्रुतम् ॥ हुंकाराभिहतां भूमौ पातयामास निष्प्रभाम् ॥ ११॥ भग्नां शक्तिं निपतितां दृष्ट्वा क्रोधसमन्वितः ॥ चिक्षेप चामरः शूलं बाणैस्तदपि साच्छिनत् ॥ १२ ॥ ततः सिंहः समुत्पत्य गजकुंभांतरस्थितः॥ बाहुयुद्धेन युयुधे तेनोच्चैस्त्रिदशारिणा ॥ १३ ॥ युध्यमानौ ततस्तौ तु तस्मान्नागान्महीं गतौ ॥ युयुधातेऽतिसंरब्धौ प्रहारैरतिदारुणैः ॥ १४ ॥ ततो वेगात्खमुत्पत्य निपत्य च मृगारिणा ॥ करप्रहारेण शिरश्चामरस्य पृथक्कृतम् ॥ १५ ॥ उदग्रश्चरणे देव्या शिलावृक्षादिभिर्हतः ॥ दंतमुष्टितलैश्चैव करालश्च निपातितः ॥ १६ ॥

प्रगृह्यत्वाभावश्छांदसः ॥ १४ ॥ तत इति ॥ युद्धानंतरम् । वेगात्समुत्पत्य गत्वा पुनस्ततो निपत्यावतीर्य इत्यर्थः ॥ १५ ॥ उदग्रश्चेति ॥ रणे युद्धे दंतैर्गजदंतनिर्मितायुधैः मुष्टिभिस्तलैश्चपेटैश्च इत्यर्थः । यद्वा दंतैर्दंतक्षतैरित्यर्थः ॥ १६ ॥

देवीति ॥ उद्धतं तन्नामानं भिंदिपालेति दमध्यः ॥ १७ ॥ १८ ॥ बिडालस्येति ॥ यमक्षयं यमगृहम् ॥ १९ ॥ एवमिति ॥ गणान् निःश्वाससंभवान् ॥ २० ॥ कांश्चिदिति ॥ खुरः कवर्गादिः ॥ २१ ॥ वेगेन कांश्चिदिति ॥ वेगयुक्तभ्रमणेन वेगो गतेर्भ्रमणं मण्डलाकारगतिः ॥ २२ ॥ निपात्येति ॥ प्रमथाः गणाः ॥ २३ ॥

देवी क्रुद्धा गदापातैश्चूर्णयामास चोद्धतम् ॥ बाष्कलं भिंदिपालेन बाणैस्ताम्रं तथांधकम् ॥१७॥ उग्रास्यमुग्रवीर्यं च तथैव च महाहनुम् ॥ त्रिनेत्रा च त्रिशूलेन जघान परमेश्वरी ॥१८॥ बिडालस्यासिना कायात्पातयामास वै शिरः ॥ दुर्धरं दुर्मुखं चोभौ शरैर्निन्ये यमक्षयम् ॥ १९ ॥ एवं संक्षीयमाणे तु स्वसैन्ये महिषासुरः ॥ माहिषेण स्वरूपेण त्रासयामास तान्गणान् ॥ २० ॥ कांश्चित्तुंडप्रहारेण खुरक्षेपैस्तथापरान् ॥ लांगूलताडितांश्चान्याञ्छृंगाभ्यां च विदारितान् ॥ २१ ॥ वेगेन कांश्चिदपरान्नादेन भ्रमणेन च ॥ निःश्वासपवनेनान्यान् पातयामास भूतले ॥ २२ ॥ निपात्य प्रमथानीकमभ्यधावत सोऽसुरः ॥ सिंहं हंतुं महादेव्याः कोपं चक्रे ततोऽम्बिका ॥ २३ ॥ सोऽपि कोपान्महावीर्यः खुरक्षुण्णमहीतलः ॥ शृंगाभ्यां पर्वतानुच्चांश्चिक्षेप च ननाद च ॥२४॥ वेगभ्रमणविक्षुण्णा मही तस्य व्यशीर्यत ॥ लांगूलेनाहतश्चाब्धिः प्लावयामास सर्वतः ॥२५॥ धुतशृंगविभिन्नाश्च खंडखंडं ययुर्घनाः ॥ श्वासानिलास्ताः शतशो निपेतुर्नभसोऽचलाः ॥ २६ ॥ इति क्रोधसमाध्मातमापतंतं महासुरम् ॥ दृष्ट्वा सा चंडिका कोपं तद्वधाय तदाकरोत् ॥ २७ ॥

॥ २४ ॥ वेगेनेति ॥ विक्षुण्णा कुटिता व्यशीर्यतेति कर्मकर्तरि रूपम् । सर्वतः सार्वविभक्तिकस्तसिः । प्लावयामास जलेनेति शेषः ॥ २५ ॥ धुतेति ॥ कंपितेत्यर्थः । खंडखंडं खंडस्य खंडा यस्यां क्रियायां श्वासानिलेनाकाशं प्रत्यस्ताः क्षिप्ताः अचलाः पुनराकाशात्पेतुरित्यर्थः ॥ २६ ॥ २७ ॥

शेबि ॥ सा तस्योपरि पाशं क्षिप्त्वा तं बबंधेत्यन्वयः ॥ २८ ॥ तत इति ॥ तस्य सिंहीभूतस्य अदृश्यत देव्येति शेषः ॥ २९ ॥ तत इति ॥ तं पुरुषं देवी आश्वेव । खड्गचर्मणेति समाहारद्वंद्वः । तत्सहितं सायकैश्छिच्छेदेत्यन्वयः ॥३०॥ करेणेति ॥ महासिंहं देवीवाहनं कर्षत इत्यस्य सिंहमित्यादि । निरकृंततेति छांदसम् ॥३१॥ तत इति ॥ तथैव प्राग्वदेव ॥ ३२ ॥ तत इति ॥ महिषस्य शिवावतारत्वेन जायमानदयादिविच्छेदायात्र मद्यपानं पानं मद्यं कर्मणि ल्युट् । पानादरुणलोचना

सा क्षिप्त्वा तस्य वै पाशं तं बबंध महासुरम् ॥ तत्याज माहिषं रूपं सोऽपि बद्धो महामृधे ॥ २८ ॥ ततः सिंहोऽभवत्सद्यो यावत्तस्याम्बिका शिरः ॥ छिनत्ति तावत्पुरुषः खड्गपाणिरदृश्यत ॥ २९ ॥ तत एवाशु पुरुषं देवी चिच्छेद सायकैः ॥ तं खड्गचर्मणा सार्धं ततः सोऽभून्महागजः ॥ ३० ॥ करेण च महासिंहं तं चकर्ष जगर्ज च ॥ कर्षतस्तु करं देवी खड्गेन निरकृंतत ॥ ३१ ॥ ततो महासुरो भूयो माहिषं वपुरास्थितः॥ तथैव क्षोभयामास त्रैलोक्यं सचराचरम् ॥३२॥ ततः क्रुद्धा जगन्माता चण्डिका पानमुत्तमम्॥ पपौ पुनः पुनश्चैव जहासारुणलोचना ॥ ३३ ॥ ननर्द चासुरः सोऽपि बलवीर्यमदोद्धतः ॥ विषाणाभ्यां च चिक्षेप चंडिकां प्रति भूधरान् ॥ ३४ ॥ सा च तान्प्रहितांस्तेन चूर्णयंती शरोत्करैः ॥ उवाच तं मदोद्धूतमुखरागाकुलाक्षरम् ॥३५॥ देव्युवाच ॥ गर्ज गर्ज क्षणं मूढ मधु यावत्पिबाम्यहम् ॥ मया त्वयि हतेऽत्रैव गर्जिष्यंत्याशु देवताः ॥ ३६ ॥

पुनः पुनर्जहासेत्यन्वयः ॥ ३३ ॥ ननर्देति ॥ बलं शारीरं वीर्यमुत्साहः ताभ्यां मदो गर्वः ॥ ३४ ॥ सा चेति ॥ मदेनोद्धूतः अतिशयेन जातो मुखे रागो यस्याः सा आकुलाक्षरमिति वचनं क्रियाविशेषणम् । मद्यस्वभावोऽयम् ॥ ३५ ॥ देव्युवाच ॥ गर्ज गर्जेति ॥ संभ्रमेण द्विरुक्तिर्मदेन च पिबामीति पूर्वं पपावित्युक्तिः । राजानं प्रतिक्रम इति न दोषः ॥ ३६ ॥

ऋषिरुवाच ॥ एवामिति ॥ समुत्पत्य कूर्दनं कृत्वा तं सा आरूढा अथ एनं पादेनाक्रम्य दृढं बद्ध्वा कंठे शूलेनाताडयदित्यन्वयः ॥ ३७ ॥ तत इति ॥ तया पादाक्रांतः दृढं धृतोऽपि सः । ततः शूलताडनोत्तरं ततः महिषस्वरूपीयात् निजमुखादर्धनिष्क्रांतः निःसृतार्धकायः एव देव्या वीर्येण अति अतिशयेन संवृतः परिबद्धः निष्क्रमितुं नाशकदित्यर्थः ॥ ३८ ॥ अर्धेति ॥ एवं च शिरश्छेदोद्भवं तं दानवं शूलपाणिनमिति विशेषः । कल्पांतराय इति बोध्यम् ॥ ३९ ॥ तत इति ॥ ननाश

ऋषिरुवाच ॥ एवमुक्त्वा समुत्पत्य सारूढा तं महासुरम् ॥ पादेनाक्रम्य कंठे च शूलेनैनमताडयत् ॥ ३७ ॥ ततः सोऽपि पदाक्रांतस्तया निजमुखात्ततः ॥ अर्धनिष्क्रांत एवासीद्देव्या वीर्येण संवृतः ॥ ३८॥ अर्धनिष्क्रांत एवासौ युध्यमानो महासुरः ॥ तया महासिना देव्या शिरश्छित्त्वा निपातितः ॥ ३९ ॥ ततो हाहाकृतं सर्वं दैत्यसैन्यं ननाश तत् ॥ प्रहर्षं च परं जग्मुः सकला देवतागणाः ॥ ४० ॥ तुष्टुवुस्तां सुरा देवीं सह दिव्यैर्महर्षिभिः ॥ जगुर्गंधर्वपतयो ननृतुश्चाप्सरोगणाः ॥ ४१ ॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये महिषासुरवधो नाम तृतीयोऽध्यायः ॥ ३ ॥ ऋषिरुवाच ॥ शक्रादयः सुरगणा निहतेऽतिवीर्ये तस्मिन्दुरात्मनि सुरारिबले च देव्या ॥ तां तुष्टुवुः प्रणतिनम्रशिरोधरांसा वाग्भिः प्रहर्षपुलकोद्गमचारुदेहाः ॥१॥ देव्या यया ततमिदं जगदात्मशक्त्या निःशेषदेवगणशक्तिसमूहमूर्त्या ॥ तामंबिकामखिलदेवमहर्षिपूज्यां भक्त्या नताःस्म विदधातु शुभानि सा नः ॥ २ ॥

पलायितं हा हेति कृतं येनेति सैन्यविशेषणम् ॥ ४० ॥ तुष्टुवुरिति ॥ सुरा इंद्राद्याः दिव्यैर्ब्रह्मादिभिः सह महर्षिभिश्च सह तुष्टुवुरित्यर्थः॥ ४१॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने महिषासुरवधो नाम तृतीयोऽध्यायः ॥ ३ ॥ तुष्टुवुः सुरा इत्युक्तं तां स्तुतिमाह—ऋषिरुवाच ॥ शक्रादय इति ॥ तस्मिन् महिषासुरे देव्या निहते इत्यन्वयः । शिरोधरा ग्रीवा । अंसः स्कंधः। पुलकाः रोमांचाः ॥१॥ देव्येति ॥ आततं व्याप्तं ततं सृष्टं वा निःशेषदेवगणशक्तीनां समूहनाय

वृद्धये तच्छक्तिसमूह एव तेजोंऽशप्रचय एव च मूर्तिर्विग्रहो यस्यास्तयेत्यर्थः । समूह इति भावे कः । नतास्स्मेत्यत्र "वा शरि" इति विसर्गस्य सः ॥ २ ॥ यस्या इति ॥ यस्या अतुलं प्रभावं तेजः बलं शरीरं वक्तुमनंतः सहस्रास्योऽपि ब्रह्मा स्रष्टापि हरः सर्वशक्तिरपि नालं पर्याप्तम् । असुरेभ्यो भयस्येत्यर्थः । समाहारद्वंद्वो वा ॥ ३ ॥ या श्रीरिति ॥ पापात्मनां भवनेष्वलक्ष्मीः कृतधियां निर्मलांतःकरणानां हृदये बुद्धिः स्वर्गापवर्गसाधनं ज्ञानं सतां हृदयेषु श्रद्धा आस्तिक्यबुद्धिः कुलजनप्रभवस्य शुद्धजन्मनो हृदयेषु लज्जाऽकरणीयाप्रवृत्तिलक्षणोंऽतःकरणवृत्तिविशेषः । नतास्स्मेति प्राग्वत् ॥४॥ एषा आपाततः स्तुतिर्वस्तुतस्त्वनिर्वाच्या स्तुत्यैवेत्याह ।

यस्याः प्रभावमतुलं भगवाननंतो ब्रह्मा हरश्च न हि वक्तुमलं बलं च ॥ सा चण्डिकाखिलजगत्परिपालनाय नाशाय चाशुभभयस्य मतिं करोतु ॥ ३ ॥ या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः ॥ श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि विश्वम् ॥ ४ ॥ किं वर्णयाम तव रूपमचिंत्यमेतत्किं चातिवीर्यमसुरक्षयकारि भूरि ॥ किं चाहवेषु चरितानि तवाति यानि सर्वेषु देव्यसुरदेवगणादिकेषु ॥ ५ ॥ हेतुः समस्तजगतां त्रिगुणापि दोषैर्न ज्ञायसे हरिहरादिभिरप्यपारा ॥ सर्वाश्रयाखिलमिदं जगदंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥ ६ ॥

किमिति । असुरा दैत्या देवाः शिवादयः गणाः प्रमथाः तत्प्रभृतिषु अचिंत्यं सर्वोत्कृष्टत्वादनिरूपणीयं तव रूपमतः किं केन प्रकारेण वर्णयाम । च परं दैत्यनाशकारि भूरि वीर्यम् अति अत्युत्कृष्टं च । परं युद्धेषु यानि चरितानि तान्यप्याति अत्युत्कृष्टानि अतः किं वर्णयामित्यन्वयः। सर्वत्राचिंत्या इति ॥५॥ मूलप्रकृतिस्त्वमेवेत्याह— हेतुरिति ॥ त्वं समस्तजगतां हेतुर्मूलकारणम् । तत्र हेतुर्यतः ।त्रिगुणा सत्त्वरजस्तमोयुता नन्वेवं रागादिसंबंधेन सर्वकारणं न स्यादत आह । अपीति । त्रिगुणापि दोषैः रागादिभिर्न ज्ञानसे न विषयीक्रियसे । यद्वा दोषैर्विशिष्टा केनापि न ज्ञायसे तदभावादित्यर्थः । नन्वेवं परिच्छिन्नतया सर्वहेतुत्वं न स्यादत आह । हरिहरा-

दिभिरप्यपारा अज्ञातपरिच्छेदात्परिच्छेदाभावादित्यर्थः । तत्र हेतुः सर्वाश्रया सर्वमाश्रयं यस्याः सा । कार्यं हि कारणमाश्रयते सर्वत्र वर्तमाना च । यतश्च एव जगत्त्वांशभूतं सर्वसमष्टेर्ब्रह्मणस्त्वदंशत्वात् । एतद्द्वयं परिच्छिन्नत्वव्याहतं स्यादिति भावः । नन्वेवं विकारापत्तिरत आह । अव्याकृता षड्विधविकाररहितत्वात् । हि यतः संसारमाद्या प्रथमा प्रकृतिः सत्त्वरजस्तमसां साम्यावस्थासि । कीदृशी परमा परमात्मा मीयते जीवभावेन विच्छिद्यते यया परमात्मैव प्रकृतिः धर्माध्यासात् जीवत्वेनाध्यवसीयते ॥ ६ ॥ यस्या इति ॥ हे देवि, यस्याः समुदीरणेन उच्चारणेन समस्तसुरता सकलसुरसमूहः सर्वयज्ञेषु तृप्तिं प्रयाति सा स्वाहा त्वमेवासि । वै प्रसिद्धं तथा पितृगणस्यापि तृप्तिहेतुस्त्वमेव । अत एव जनैः पितृकर्मणि स्वधा च उच्चार्यते वा स्वाहा॥७॥ प्रकृतिरूपत्वमुक्त्वा ब्रह्मापि त्वमेवेत्याह–येति ॥ हे देवि, या मुक्तिहेतुः

यस्याः समस्तसुरतासमुदीरणेन तृप्तिं प्रयाति सकलेषु मखेषु देवि ॥ स्वाहासि वै पितृगणस्य च तृप्तिहेतुरुच्चार्यसे त्वमत एव जनैः स्वधा च ॥ ७ ॥ या मुक्तिहेतुरविचिंत्यमहाव्रता त्वमभ्यस्यसे सुनियतेंद्रियतत्त्वसारैः॥ मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैर्विद्याऽसि सा भगवती परमा हि देवि ॥ ८ ॥ शब्दात्मिका सुविमलर्ग्यजुषां निधानमुद्गीथरम्यपदपाठवतां च साम्नाम् ॥ देवि त्रयी भगवती भवभावनाय वार्ता च सर्वजगतां परमार्तिहंत्री ॥ ९ ॥

अविचिंत्यमनुष्ठेयत्वर्चिताया अप्यविषयं महाव्रतमहिंसा सत्यास्तेयब्रह्मचर्यापरिग्रहरूपं योगशास्त्रप्रसिद्धं साधनं यस्या ईदृशी च या सा भगवती भगवद्विषया परमा उत्कृष्टविद्या तद्विषयावरणभर्जिका ब्रह्मज्ञानरूपा त्वमेवासि । हि यतः अतस्त्यक्तसमस्तरागादिमोक्षेच्छुभिर्मुनिभिर्वशीकृतेंद्रियैः तत्त्वं ब्रह्मैव ज्ञेयत्वेन सारो येषां तैरभ्यस्यसे इत्यर्थः । अभ्यस्यसे इत्यत्रासंधिः संहिताया अनित्यत्वात् ॥ ८ ॥ शब्देति ॥ सुविमलानामपौरुषत्वेन दोषरहितानामृचां यजुषां साम्नां च निधानमाश्रयः शब्दब्रह्मरूपा भवस्य संसारस्य भावनाय प्रवृत्त्यविच्छेदाय या देवी द्योतनशीला । त्रयी वेदत्रयी सा त्वं भगवती । भवंति ते भवाः प्राणिनस्तेषां भवाय जीवनाय वार्ता कृषिवाणिज्यपशुपालत्वम् ॥ ९ ॥ तदधिष्ठात्र्यपि त्वमेवेत्याह–मेधासीति ॥ मेधा सरस्वती सैव दुःखप्राप्यत्वेन दुर्गासीत्युच्यते । दुर्गसंसारसागरस्य नौः ज्ञान-

द्वारा । एवं पूर्वार्द्धेन ब्राह्मीत्वं चोक्तम् । प्रसिद्धनौतो व्यतिरेकमाह । असंगेति । सा हि कर्णधारादिसंगवती । शंभौ कृता प्रतिष्ठा आस्पदं यया अर्धशरीरत्वात् । उत्तरार्धेन रौद्रीत्वं वैष्णवीत्वं चोक्तम् ॥ १० ॥ ईषदिति ॥ ईषत् हाससहितं छांदसः पदव्यत्ययः । पूर्वार्धोक्तगुणविशिष्टं तव वक्त्रं विलोक्यापि आत्तरुषा प्राप्तरोषेण महिषासुरेण सहसा दर्शनसमकालमेव तथातिनिष्ठुरं यत्प्रहृतं तदत्याश्चर्यमित्यर्थः । जगन्मोहकमपि दृष्ट्वा न तस्य मोह इति आतिसुभेदोऽयम् । तादृशस्यापि वधेन देव्या एवोत्कर्षः सिद्ध्यति ॥ ११ ॥ दृष्ट्वा त्विति ॥ दृष्ट्वापीत्यर्थः । भ्रुवाः कुटी वक्रता तया करालं भीषणमद्यच्छशांकेत्यनेनातिरक्तता । अनेन महिषस्यापि

मेधासि देवि विदिताखिलशास्त्रसारा दुर्गाऽसि दुर्गभवसागरनौरसंगा ॥ श्रीः कैटभारिहृदयैककृताधिवासा गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा ॥ १० ॥ ईषत्सहासममलं परिपूर्णचंद्रबिम्बानुकारिकनकोत्तमकांतिकांतम् ॥ अत्यद्भुतं प्रहृतमात्तरुषा तथापि वक्त्रं विलोक्य सहसा महिषासुरेण ॥ ११ ॥ दृष्ट्वा तु देवि कुपितं भ्रुकुटीकरालमुद्यच्छशांकसदृशच्छवि यन्न सद्यः ॥ प्राणान्मुमोच महिषस्तदतीव चित्रं कैर्जीवते हि कुपितांतकदर्शनेन ॥१२॥ देवि प्रसीद परमा भवती भवाय सद्यो विनाशयसि कोपवती कुलानि ॥ विज्ञातमेतदधुनैव यदस्तमेतन्नीतं बलं सुविपुलं महिषासुरस्य ॥ १३ ॥ ते संमता जनपदेषु धनानि तेषां तेषां यशांसि न च सीदति धर्मवर्गः ॥ धन्यास्त एव निभृतात्मजभृत्यदारा येषां सदाभ्युदयदा भवती प्रसन्ना ॥ १४ ॥

धीरत्वं देव्युत्कर्षः प्राग्वदेव ॥१२॥ देवीति ॥ देवि, प्रसीदेत्युक्त्वा विचार्य व्यर्थमेतद्वचः प्रसन्नत्वादेव तवेत्याह । भवती परमा परा सानुग्रहा मा बुद्धिर्यस्यास्तादृशी । कथमेतत् ज्ञानं तत्राह । यतो नो भवाय कोपवती त्वं नो रिपूणां कुलानि सद्यो विनाशयसि । तत्र संप्रतिपत्तिमाह । विज्ञातमित्यादि । एवं च कोपोऽप्यपररक्षणफलको नतु स्वाभाविक इति सत्त्वगुणप्रधानत्वं दर्शितम् ॥१३॥ ते इति ॥ संमताः महाजनांगीकृताः । धर्मवर्गः धर्मघटितो वर्गः धर्मार्थकाममोक्षरूपः । धन्याः पुण्यव-

त्वेन प्रसिद्धाः निभृताः नितरां पोषिताः । अभ्युदयदा सर्वमनोरथदा ॥ १४ ॥ धर्म्याणीति ॥ हे देवि, भवतीप्रसादात् यः सुकृती प्राग्जन्मार्जितपुण्यवान् सततमेव सुकृतलब्धत्वत्प्रसादादेव अत्यादृतः नित्यनैमित्तिकादावतिश्रद्धावान् प्रतिदिनं सदैव षष्टिघटिकावच्छेदेन सकलानि धर्म्याणि करोति पुनस्त्वत्त एव त्वत्प्रीत्युद्देशे कृतकर्मभ्यो लब्धत्वत्प्रसादादेव स्वर्गं प्रयाति ततः क्रमेण वा मोक्षं च ननु निश्चये तेन त्वं लोकत्रयेऽपि फलदा इति शेषः ॥ १५ ॥ दुर्गे इति ॥ दुर्गे दुर्गमे संकटे इति यावत् । तन्नाम इति च । दारिद्र्येऽति दरिद्रशब्दाद्भावे ष्यञ् । भयं प्रतिकूलप्रतिसंधानजम् । आर्द्रचित्ता ।स्निग्धचित्ता ॥ १६ ॥ सर्वोपकारित्वमुपपादयति–एभिरिति ॥

धर्म्याणि देवि सकलानि सदैव कर्माण्यत्यादृतः प्रतिदिनं सुकृती करोति ॥ स्वर्गं प्रयाति च ततो भवतीप्रसादाल्लोकत्रयेऽपि फलदा ननु देवि तेन ॥ १५ ॥ दुर्गे स्मृता हरसि भीतिमशेषजंतोः स्वस्थैः स्मृता मतिमतीवशुभां ददासि ॥ दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता ॥ १६॥ एभिर्हतैर्जगदुपैति सुखं तथैते कुर्वंतु नाम नरकाय चिराय पापम् ॥ संग्राममृत्युमधिगम्य दिवं प्रयांतु मत्वेति नूनमहितान्विनिहंसि देवि ॥ १७ ॥ दृष्ट्वैव किं न भवती प्रकरोति भस्म सर्वासुरानरिषु यत्प्रहिणोषि शस्त्रम् ॥ लोकान्प्रयान्तु रिपवोऽपि हि शस्त्रपूता इत्थं मतिर्भवति तेष्वहितेषु साध्वी ॥ १८ ॥ खड्गप्रभानिकरविस्फुरणैस्तथोग्रैः शूलाग्रकांतिनिवहेन दृशोऽसुराणाम् ॥ यन्नागता विलयमंशुमदिंदुखंडयोग्याननं तव विलोकयतां तदेतत् ॥ १९ ॥

दैत्यैरित्यर्थः । उपैतीति लट् । उपैत्वित्यर्थः । एते दैत्याः नामेत्यभ्युपगमे । नरकायेति तादर्थ्ये चतुर्थी । तथापि रणे मृत्युं प्राप्य स्वर्गं गच्छंतु इति हेतुत्रयं मनसि कृत्वा जगदहितान् हंसीत्यर्थः ॥ १७ ॥ दृष्ट्वैवेति ॥ दर्शनोत्तरमेतावन्मात्रेणैव भस्मकारणयोग्येषु यत्त्वं शस्त्रं पातयसि तत्तेषामुत्तमलोकप्राप्तये इति तेष्वपि उपकारिकैव त्वमिति किं वक्तव्यं भक्तेष्विति भावः ॥ १८ ॥ खड्गेति ॥ निकरः समूहः विस्फुरणं सर्वत्र प्रसरणम् । निवहः समूहः यद्विलयं नागतास्तदेतत् अंशुमदिंदुखंडं

तद्योगि तद्युक्तमाननं तव विलोकयतां चैषामाश्रयादिति शेषः ॥ १९ ॥ दुर्वृत्तानां वृत्तं पापं तस्य शमनं तव शीलं स्वाभाविको गुणः । तथान्यैरतुल्यमत एवाविचिंत्यं कीदृशमिति चिंताविषयम् । दृष्टैव किं नेत्यादिना रूपं रूपमाकृतिः च परं हता आत्मसात्कृताः देवा येन ईदृशः पराक्रमो येषां तेषां दैत्यानां हंतृ वीर्यम् एवं चेदृशरूपेणेदृशबलेन तेषां शस्त्रतो हननमिति तदीयपापशांतये इति तेषु दयैव त्वया कृतेति भावः ॥२० ॥ केनेति ॥ अतिहारि मनोहरं विरोधोऽत्रालंकारः । केनोपमेति तृतीया आर्षत्वात् । चित्ते कृपा रिपुष्वप्युपकारत्वात् । निष्ठुरता तु स्पष्टैव । अत्र कृपा स्वाभाविकी निष्ठुरता त्वारोपितेति विरोधपरिहार इति बोध्यम् ॥ २१ ॥

दुर्वृत्तवृत्तशमनं तव देवि शीलं रूपं तथैतदविचिंत्यमतुल्यमन्यैः॥ वीर्यं च हंतृहृतदेवपराक्रमाणां वैरिष्वपि प्रकटितैव दया त्वयेत्थम् ॥ २० ॥ केनोपमा भवतु तेऽस्य पराक्रमस्य रूपं च शत्रुभयकार्यतिहारि कुत्र॥ चित्ते कृपा समरनिष्ठुरता च दृष्टा त्वय्येव देवि वरदे भुवनत्रयेऽपि ॥ २१ ॥ त्रैलोक्यमेतदखिलं रिपुनाशनेन त्रातं त्वया समरमूर्द्धनि तेऽपि हत्वा ॥ नीता दिवं रिपुगणा भयमप्यपास्तमस्माकमुन्मदसुरारिभवं नमस्ते ॥ २२ ॥ शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ॥ घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥ २३ ॥ प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ॥ भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ २४॥ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरंति ते ॥ यानि चात्यर्थघोराणि तै रक्षास्मांस्तथा भुवम् ॥ २५ ॥

त्रैलोक्यमिति ॥ त्वयेत्यंतमेकान्वयः । ततो रिपुगणा इत्यंतमपरं वाक्यं भयमित्यतो भवमित्यंतमपरम् । अनेन चित्ते कृपेत्येतद्विवृतम् । नमस्ते इत्यनेन नमस्कारातिरिक्तप्रत्युपकरणे नास्माकं सामर्थ्यमिति ध्वनितम् ॥२२॥२३॥ प्राच्यामिति ॥ दक्षिणे इत्यस्य दिग्भागे इति शेषः । भ्रामणेनेत्यत्र ह्रस्वाभावः । संज्ञापूर्वकविधेरनित्यत्वात् ॥२४॥ सौम्यानीति ॥ सृष्टिस्थितिव्यापाराणि अत्यर्थघोराणि संहारव्यापाराणि तथा भुवं पृथिवीं चेत्यर्थः ॥ २५ ॥

खड्गेति ॥ संगः संसर्गः ॥ २६ ॥ ऋषिरुवाच ॥ एवमिति ॥ नंदनं देवोद्यानं दिव्यैः उत्कृष्टैः गंधाः श्रीरागादयः अनुलेपनं श्रीचंदनादि ॥ २७ ॥ भक्त्येति ॥ अंतः-करणेन प्रेमतया भजनं सेवनं भक्तिः तया प्रेमलक्षणया भक्त्या दिव्यैर्मनोज्ञैः । धूपैस्त्विति पाठः ॥ २८ ॥ देव्युवाच ॥ व्रियतामिति ॥ देवा ऊचुः । भगवत्येति ॥२९॥ यदिति ॥ यत इत्यर्थः। पूर्वान्वय्यर्धम् । उत्तरार्धमुत्तरान्वयि । यदि वापीति वाशब्द एवमर्थे यद्येवं सत्यपि वरो देय इति तवेच्छा तदा वक्ष्यमाणमस्त्वित्यर्थः।

खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ॥ करपल्लवसंगीनि तैरस्मान्रक्ष सर्वतः ॥ २६ ॥ ऋषिरुवाच ॥ एवं स्तुता सुरैर्दिव्यैः कुसुमैर्नंदनोद्भवैः ॥ अर्चिता जगतां धात्री तत्र गंधानुलेपनैः ॥ २७ ॥ भक्त्या समस्तैस्त्रिदशैर्दिव्यैर्धूपैः सुधूपिता ॥ प्राह प्रसादसु-मुखी समस्तान्प्रणतान्सुरान् ॥ २८ ॥ देव्युवाच ॥ व्रियतां त्रिदशाः सर्वे यदस्मत्तोऽभिवांछितम् ॥ देवा ऊचुः ॥ भगवत्या कृतं सर्वं न किंचिदवशिष्यते ॥ २९ ॥ यदयं निहतः शत्रुरस्माकं महिषासुरः ॥ यदि चापि वरो देयस्त्वयास्माकं महेश्वरि ॥ ३० ॥ संस्मृता संस्मृता त्वं नो हिंसेथाः परमापदः ॥ यश्च मर्त्यैः स्तवैरेभिस्त्वां स्तोष्यत्यमलानने ॥३१॥ तस्य वित्तर्द्धिविभवैर्धनदारादिसंपदाम् ॥ वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदाम्बिके ॥३२॥ ऋषिरुवाच ॥ इति प्रसादिता देवैर्जगतोऽर्थे तथात्मनः ॥ तथेत्युक्त्वा भद्रकाली बभूवांतर्हिता नृप ॥ ३३ ॥

अस्माकमस्मभ्यमित्यर्थः ॥३०॥ संस्मृतेति ॥ हिंसेथा इत्यार्षः । उत्तरार्धमुत्तरान्वयि ॥ ३१ ॥ तस्येति ॥ वित्तर्द्धिविभवैरिति सहयोगे तृतीया । भवने च साहित्यं वित्तं ज्ञानं तस्य वृद्धिरुपचयः विभवा ऐश्वर्यादयः । धनदारादीनां संपद अनुरूपा आत्मभावाः आदिना पुत्रादिवृद्धये उपचयाय ॥ ३२ ॥ ऋषिरुवाच ॥ इतीति ॥ तथात्मनः आत्मनश्चार्थे इत्यर्थः । तथेत्युक्त्वा तथास्त्वित्युक्त्वा भद्रं कालयतीति भद्रकाली अंतर्हिताऽदृश्या बभूवेत्यन्वयः ॥ ३३ ॥

इतीति ॥ स्पष्टम् ॥३४॥ पुनश्चेति ॥ गौरीदेहः कारणं यस्या इत्यर्थः । समुद्भावः प्रादुर्भावः यथा तत्र हेतुर्दुष्टवधो देवलोकरक्षणं वा ॥३५॥ ननु तेनाप्यस्याः कोऽर्थस्तत्राह—उपकारिणीति ॥ उपकारः स्वभावायत्त इत्यर्थः । तच्छृणुष्वेत्यार्षस्तङ् । तत्प्रकारं मया मत्तः निपातोऽयम् । ख्यातं लोकप्रसिद्धम् । एनामुपक्रम्य लक्ष्मीतंत्रे लक्ष्मीवाक्यम् । "अभिष्टुता सुरैः साहं माहिषं जघ्नुषी क्षणात् । महिषांतकरी सूक्तं दृष्टं देवैर्महर्षिभिः ॥ उत्पत्तियुद्धविक्रांतिस्तोत्रं चेति सुरेश्वर । कथयंति सुविस्तीर्णं ब्राह्मणा वेदपारगाः॥ लभंते च फलं शश्वदाधिपत्यमनश्वरम् ।" इति महिषांतकरीसूक्तं देवैर्महर्षिभिश्च दृष्टम् । "देव्या यया ततम्" इति श्लोकेऽखिलदेवमहर्षिपूज्यत्वविशेषणात् "युष्माभिः स्तुतयो याश्च" इति श्लोके ब्रह्मर्षीणां स्तुतिकर्तृत्वप्रतिपादनाच्चेति बोध्यम् ॥३६॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्या-

इत्येतत्कथितं भूप संभूता सा यथा पुरा ॥ देवी देवशरीरेभ्यो जगत्त्रयहितैषिणी ॥३४॥ पुनश्च गौरीदेहात्सा समुद्भूता यथाभवत् ॥ वधाय दुष्टदैत्यानां तथा शुंभनिशुंभयोः ॥ ३५ ॥ रक्षणाय च लोकानां देवानामुपकारिणी ॥ तच्छृणुष्व मयाख्यातं यथावत्कथयामि ते ॥ ३६ ॥ इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वंतरे शक्रादिकृतदेवीस्तुतिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥ ऋषिरुवाच ॥ पुरा शुंभनिशुंभाभ्यामसुराभ्यां शचीपतेः ॥ त्रैलोक्यं यज्ञभागाश्च हृता मदबलाश्रयात् ॥ १ ॥

ख्याने चतुर्थोऽध्यायः ॥४॥ यथावत्कथयामीति प्रतिज्ञातमितिहासमाह—ऋषिरुवाच ॥ पुरेति ॥ कश्यपात् दन्वामुत्पन्नौ नमुचिज्येष्ठौ शुंभनिशुंभाविमौ सताळव्यौ चेति वामनपुराणे लक्ष्मीतंत्रेऽपि । " तामसे त्वंतरे शक्र महाविद्यां विधाय सा । गौरीदेहात्समुद्भूता कौशिकीति तदा ह्यहम् ॥ वधाय दुष्टदैत्यानां तथा शुंभनिशुंभयोः । मदीयाः शक्तयो यास्ता देवश्रेष्ठशरीरगाः ॥ तास्तास्तद्रूपधारिण्यः साहाय्यं विदधुर्मम । ताभिर्निहतदैत्येंद्राद्धंतव्यो मे यथा तथा ॥ संहृत्यात्मनि ताः सर्वा मदीया विप्रुषोऽखिलाः । अहं निजघ्नुषी पश्चाद्दैत्यौ शुंभनिशुंभकौ ॥ " इति । " नारायणीस्तुतिर्नाम सूक्तं परमशोभनम् । पुरंदर तदा दृष्टं देवैरग्निपुरोगमैः ॥ एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति । कौशिकी सर्वदेवेश सर्वकामप्रदा ह्यहम् ॥ उत्पत्तिर्युद्धविक्रांतिः स्तुतिश्चेति पुरातनैः । पठ्यते त्रितयं विप्रैर्वेदवेदांगपारगैः ॥

एतासां परमा प्रोक्ता कूटस्था सा महीयसी। महालक्ष्मीर्महाभागाः प्रकृतिः परमेश्वरी ॥ अमुष्याः स्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः। नमो देव्यादिकं देवीसूक्तं सर्वफलप्रदम् ॥ इमां देवीं स्तुवन्नित्यं स्तोत्रेणानेन मामिह। क्लेशानतीत्य सकलानैश्वर्यं महदश्नुते ॥" इति। "यजप्त्वा वैश्यसुरथौ परां सिद्धिमवापतुः।" इति अग्निमुखदेवगणदृष्टस्तोत्रं नारायणीसूक्तम्। तत्र नारायणि नमोऽस्तु ते इति बहुधाभ्यासात् नमो देव्यै इत्यादिकं देवीसूक्तं देवीपदेनोपक्रमादिति बोध्यम्। मदो गर्वः बलं शक्तिः ॥ १ ॥ तावेवेति ॥ सुवति कर्मणि लोकं प्रेरयतीति सूर्यस्तस्य भावः सर्वलोककर्मप्रेरकता तद्वदैन्दवमधिकारं तथा कौबेरं वरुणस्य चाधिकारमित्यन्वयः ॥ २ ॥ तावितिः ॥ पवनः ऋद्ध्यतेऽनेनेति करणे क्तिन्। तेन तदधिकारमित्यर्थः। हृतेति ॥ आत्मसात्कृता इत्यर्थः। अधिकास्त्रिरावृत्ता दश

तावेव सूर्यतां तद्वदधिकारं तथैन्दवम् ॥ कौबेरमथ याम्यं च चक्राते वरुणस्य च ॥ २ ॥ तावेव पवनर्द्धिं च चक्रतुर्वह्निकर्म च ॥ ततो देवा विनिर्धूता भ्रष्टराज्याः पराजिताः ॥ ३ ॥ हृताधिकारास्त्रिदशास्ताभ्यां सर्वे निराकृताः ॥ महासुराभ्यां तां देवीं संस्मरन्त्यपराजिताम् ॥ ४ ॥ तयास्माकं वरो दत्तो यथापत्सु स्मृताखिलाः ॥ भवतां नाशयिष्यामि तत्क्षणात्परमापदः ॥ ५ ॥ इति कृत्वा मतिं देवा हिमवन्तं नगेश्वरम् ॥ जग्मुस्तत्र ततो देवीं विष्णुमायां प्रतुष्टुवुः ॥ ६ ॥ देवा ऊचुः ॥ नमो देव्यै महादेव्यै शिवायै सततं नमः ॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताःस्म ताम् ॥ ७ ॥

त्रिदशाः अधिकावृत्तरूपांतर्भावेनैकार्थाभावः। तेन त्रयस्त्रिंशदित्यर्थः। ते चार्का द्वादश रुद्रा एकादश वसवोऽष्टौ विश्वेदेवौ द्वाविति। एक एव त्रिशब्दस्तंत्रेणोभयार्थः। निराकृताः स्वर्गादपि निराकृताः निःसारिताः। संस्मरंति स्मृतवंतः वर्तमानसामीप्ये भूते लट् ॥ ३ ॥ ४ ॥ तत्रैव हेतुमाह—तयेति ॥ स्मृता सती अखिला परमापदः इत्यन्वयः ॥ ५ ॥ इतीति ॥ भवान्या अभिव्यक्तिस्थानत्वाद्धिमवद्गमनं तत्र हिमवति शुंभनिशुंभदमन्याः सरस्वतीत्वेऽपि यथा विष्णुमायात्वं तथोक्तमुपक्रमे ॥ ६ ॥ द्योतितां सार्वात्म्येन स्तुतिमाह—देवा ऊचुः॥ नम इति ॥ देवी द्युत्यादीनि महादेवी महतां ब्रह्मादीनामपि स्वर्गादिव्यवहारप्रवर्तयित्री शिवा कल्याणरूपा तद्धेतुत्वात्।

प्रकृत्यै सृष्टिशक्त्यै भद्रा रक्षणशक्तिः नियताः समाहितचित्ताः प्रणताः स्म । स्मेति पादपूरणे ॥७॥ रौद्रायै इति ॥ संहारशक्त्यै नित्या कालानवच्छिन्ना नित्याख्या शक्तिरूपा च । गौरीति तद्धारणा धात्री जगदाधारा ज्योत्स्ना चंद्रकिरणा इंदुश्चंद्र इदमुपलक्षणम् । ज्योतीरूपस्य सुखा परमानंदरूपा ॥ ८ ॥ कल्याणी तत्कर्त्री । शर्वाणी शिवशक्तिः ॥ ९ ॥ दुर्गायै इति ॥ दुःखज्ञेयायै दुर्गो दुरधिगमः परिच्छेदो यस्यास्तस्यै दुर्गात्संसारात्पारं करोतीति च । सारो बलं तद्वत्यै सर्वकारिण्यै सर्वजनने स्वतंत्रायै प्रकृतिपुरुषयोर्भेदज्ञानं ख्यातिस्तद्रूपायै प्रसिद्ध्यै च कृष्णा तद्वर्णा कृष्णशक्तिश्च धूम्रा तद्वर्णा ॥ १० ॥ अतीति ॥ विद्यात्वेन संसारशामकत्वाद-

रौद्रायै नमो नित्यायै गौर्य्यै धात्र्यै नमो नमः ॥ ज्योत्स्नायै चेंदुरूपिण्यै सुखायै सततं नमः ॥ ८ ॥ कल्याण्यै प्रणतां वृद्ध्यै सिद्ध्यै कुर्म्मो नमो नमः ॥ नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः ॥ ९ ॥ दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ॥ ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥१०॥ अतिसौम्यातिरौद्रायै नतास्तस्यै नमो नमः ॥ नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥११॥ या देवी सर्वभूतेषु विष्णुमायेति शब्दिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १२ ॥ या देवी सर्वभूतेषु चेतनेत्यभिधीयते ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥१३॥ या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १४ ॥ या देवी सर्वभूतेषु निद्रारूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्मै नमस्तस्यै नमो नमः ॥ १५ ॥

तिसौम्या । अविद्यारूपेण संसारहेतुत्वादतिरौद्रा । नमो नमः इत्येतदुक्तिपूर्वकं नताः नम्रा इत्यर्थः । जगत्प्रतिष्ठा जगदुपादानकारणम् । देव्यै देवशक्त्यै कृतिः क्रिया ॥ ११ ॥ येति ॥ विष्णुमाया मूलशाब्दाविद्येति शब्दिता सर्वागमेषु प्रतिपादिता । नमस्तस्यै इति त्रिकेन कायिकवाचिकमानसिकरूपं नमस्कारत्रयं दर्शितमेवमग्रेऽपि ॥ १२ ॥ चेतना निर्विकल्पा या चिच्छक्तिरित्युच्यते ॥ १३ ॥ बुद्धिः सविकल्पकज्ञानम् ॥ १४ ॥ निद्रा सुषुप्तिः स्वप्नावस्था वा ॥ १५ ॥

क्षुधा अभ्यवजिहीर्षा ॥ १६ ॥ छाया संसारतापाभावः वर्णसादृश्यं च ॥ १७ ॥ शक्तिः कार्यजननसामर्थ्यम् ॥ १८ ॥ तृष्णा अनात्मीयस्वीकारेच्छा ॥ १९ ॥ क्षांतिः सत्यपि सामर्थ्येऽपकाराचिकीर्षा ॥ २० ॥ जातिः गोत्वादिः ॥ २१ ॥ लज्जा स्वकार्यविषयान्यज्ञानभिन्ना ॥ २२ ॥ शांतिरिंद्रियसंयमः ॥ २३ ॥ श्रद्धा

या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १६ ॥ या देवी सर्वभूतेषु च्छायारूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १७ ॥ या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १८ ॥ या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ १९ ॥ या देवी सर्वभूतेषु क्षांतिरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २० ॥ या देवी सर्वभूतेषु जातिरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २१ ॥ या देवी सर्वभूतेषु लज्जारूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २२ ॥ या देवी सर्वभूतेषु शांतिरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २३ ॥ या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २४ ॥ या देवी सर्वभूतेषु कांतिरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २५ ॥ या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २६ ॥ या देवी सर्वभूतेषु वृत्तिरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥ २७ ॥

श्रुत्याद्युक्तेऽर्थे आस्तिकत्वम् ॥ २४ ॥ कांतिः शोभा ॥ २५ ॥ लक्ष्मीर्धनादिसंपत् ॥ २६ ॥ वृत्तिर्जीविकावृत्तिश्च ॥ २७ ॥

स्मृतिरनुभूतविषयज्ञानम् ॥ २८ ॥ दया परदुःखप्रहाणेच्छा ॥२९॥ तुष्टिरधिगताधिकानभिलाषः ॥३०॥ माता पालयित्री मातृकाधिष्ठात्री देवता च ॥३१॥ भ्रांतिरतद्वति तद्वत्प्रत्ययः ॥३२॥ इंद्रियेति ॥ याखिलेषु भूतेषु अंतर्या विद्यया स्थिता इंद्रियाणां ज्ञानकरणानां ज्ञानविषयाणां सूक्ष्मस्थूलानामधिष्ठात्री प्रवर्तिका च तस्यै व्याप्तिदेव्यै व्याप्तिकायै इत्यर्थः ॥३३ ॥ चितिः चिच्छक्तिः । अत्रायं संग्रहः । " विष्णुमाया चेतना च बुद्धिर्निद्रे क्षुधा तथा । छाया शक्तिश्च तृष्णा च क्षांतिर्जातिस्ततः परम् ॥ लज्जा कांतिस्ततः श्रद्धा कांतिर्लक्ष्मीस्ततः परा । वृत्तिः स्मृतिर्दया चैव तुष्टिर्माता ततः परम् ॥ भ्रांतिर्व्याप्तिश्चितिश्चैव त्रयोविंशतिसंख्यकाः ।

या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥२८॥ या देवी सर्वभूतेषु दयारूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥२९॥ या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥३०॥ या देवी सर्वभूतेषु मातृरूपेण संस्थिता ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥३१॥ या देवी सर्वभूतेषु भ्रांतिरूपेण संस्थिता॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥३२॥ इंद्रियाणामधिष्ठात्री भूतानां चाखिलेषु या॥ भूतेषु सततं तस्यै व्याप्त्यै देव्यै नमो नमः ॥३३॥ चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् ॥ नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥३४॥ स्तुता सुरैः पूर्वमभीष्टसंश्रयात्तथा सुरेंद्रेण दिनेषु सेविता॥ करोतु सा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहंतु चापदः ॥३५॥

इतोऽधिकमनार्षं स्यात्तंत्रे कात्यायने स्फुटम् ॥ " नवार्णपीठपूजाविधावेता एव त्रयोविंशतिः तत्कथने व्याप्तिचित्योः त्यागश्च । तदयुक्तम् । कात्यायनीतंत्रविरोधात् ॥३४॥ स्तुतेति ॥ या शुभहेतुरीश्वरी सुरैर्ब्रह्मादिभिः पूर्वं स्तुता तथा इंद्रेण च महिषवधे सत्यमभीष्टस्य संश्रयात् दिनेषु प्रतिदिनं सेविता सा नः शुभानि भद्राणि अतिशयितशुभानि करोतु आपदश्च हंत्वित्यन्वयः ॥ ॥ ३५ ॥

येति ॥ सांप्रतं च या ईशा सुरैरस्माभिः उद्धतदैत्यपीडितैः नमस्यते स्तूयते च करोतु सा न इत्यनेनान्वयः ॥ ३६ ॥ ऋषिरुवाच ॥ एवमिति ॥ तत्र देवसन्निहिते हे राजन्, पार्वती जाह्नव्यास्तोये स्नातुमिव स्वस्तवादियुक्तानामभिसंमुखं ययावित्यर्थः ॥ ३७ ॥ तथापि तेषामज्ञानं दृष्ट्वा का स्तूयत इति पृच्छति–सेति ॥ का मदन्या स्तूयते यन्मां नाभिभाषथ मदन्याया अभावः ततोऽप्यज्ञानमेव दृष्ट्वा तेषां दयया स्वयमब्रवीत् । अस्या इत्युक्तिः राजानं प्रति ऋषेः शरीररूपात् कोशतो गृहात् समुद्भूता सत्त्वप्रधानांशेन प्रादुर्भूताऽत एव शिवा अब्रवीदित्यर्थः ॥ ३८ ॥ किमब्रवीत्तदाह–स्तोत्रमिति ॥ समेतैः मिलितैः रणे निशुम्भेन पराजितैः अत एव शुंभेन निराकृतैः स्वर्गादिति शेषः ॥३९॥ शरीरेति ॥ यत् निर्गता ततः कौशिकीति गीयते इत्यन्वयः। कौशिकीति पृषोदरादित्वात्साधुः। तालव्यमिदम् ॥ ४० ॥ तस्या-

**या सांप्रतं चोद्धतदैत्यतापितैरस्माभिरीशा च सुरैर्नमस्यते ॥ या च स्मृता तत्क्षणमेव हन्ति नः सर्वापदो भक्तिविनम्रमूर्तिभिः ॥ ३६ ॥ ऋषिरुवाच ॥ एवं स्तवादियुक्तानां देवानां तत्र पार्वती ॥ स्नातुमभ्याययौ तोये जाह्नव्या नृपनंदन ॥ ३७ ॥ साब्रवीत्तान्सुरान्सुभ्रुर्भवद्भिः स्तूयतेऽत्र का ॥ शरीरकोशतश्चास्याः समुद्भूताब्रवीच्छिवा ॥ ३८ ॥ स्तोत्रं ममैतत्क्रियते शुंभदैत्यनिराकृतैः ॥ देवैः समेतैः समरे निशुंभेन पराजितैः ॥ ३९ ॥ शरीरकोशाद्यत्तस्याः पार्वत्या निःसृताम्बिका ॥ कौशिकीति समस्तेषु ततो लोकेषु गीयते ॥ ४० ॥ तस्यां विनिर्गतायां तु कृष्णाभूत्सापि पार्वती ॥ कालिकेति समाख्याता हिमाचलकृताश्रया ॥ ४१ ॥**

मिति ॥ कृष्णसहोदरीत्वात्तमःप्रधानशिवशक्तित्वाच्च कृष्णवर्णत्वं सरस्वत्याः प्रादुर्भूतत्वाच्च शिवशक्तेस्तत एव पुनः सरस्वत्या निर्गम इति बोध्यम्। तदारभ्य शिवः कालीपातिरिति बोध्यम्। आश्रयः स्थानम्। तदुक्तं वैकृतिकरहस्ये। " गौरीदेहात्समुद्भूता या सत्त्वैकगुणाश्रया। साक्षात्सरस्वती प्रोक्ता शुंभासुरनिबर्हिणी ॥ दधौ चाष्टभुजा बाणमुसले शूलचक्रभृत्। शंखं घंटां लांगलं च कार्मुकं वसुधाधिप ॥ एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति। " शिवपुराणसंहितायाम्। " दैत्यौ शुंभनिशुंभाख्यौ भ्रातरौ संबभूवतुः। याचितं तपसा ताभ्यां ब्रह्मणः परमेष्ठिनः॥ अवध्यत्वं जगत्यस्मिन्पुरुषैरखिलैरपि। अयोनिजा तु या कन्या त्र्यंगकोशसमुद्भवा ॥

अजातपुंस्पर्शरतिरविलंबपराक्रमा । तस्या वध्यावुभौ संख्ये तस्यां कामाभिभूतये ॥ इति चाभ्यर्थितो ब्रह्मा ताभ्यां प्राह तथास्त्विति । " ततस्ताभ्यां जगति उपद्रुते " तयोर्लयाय देवेशं ब्रह्मा प्रार्थितवाञ्छिवम् । विनिंद्यापि रहस्यं वां क्रोधयित्वा यथा तथा ॥ तद्वर्णकोशजां शक्तिमकामां कन्यकात्मिकाम् । निशुंभशुंभयोर्हर्त्रीं देवेभ्यो दातुमर्हसि ॥ एवमभ्यर्थितो धात्रा भगवान्नीललोहितः । कालीत्याह रहस्यं वाम् " इत्युक्तम् । क्रुद्धां तां दृष्ट्वा क्रीडार्थं कालीत्युक्तामिति शिवस्योक्तेः । " भूयसी च तव प्रीतिरगौरमिति मे वपुः । क्रीडोक्तिरपि कालीति घटते कथमन्यथा ॥ " इति देवीवचनमुपन्यस्य कथंचिद्देवी देवाज्ञया देवी गौतमाश्रमं प्राप्य तपश्चरित्वा रजोगुणाधिकात् ब्रह्मगुणे गौररूपं प्राप्य नीलकोशमुत्सृष्टवती ततः कोशाद्भूता कौशिकीत्युक्तम् । " तत्कोशं सहसोत्सृज्य गौरी सा समजायत । सा तु मायात्मिका

ततोऽम्बिकां परं रूपं बिभ्राणां सुमनोहरम् ॥ ददर्श चण्डो मुण्डश्च भृत्यौ शुंभनिशुंभयोः॥४२॥ ताभ्यां शुंभाय चाख्याता सातीव सुमनोहरा ॥ काप्यास्ते स्त्री महाराज भासयंती हिमाचलम् ॥ ४३ ॥ नैव तादृक्क्वचिद्रूपं दृष्टं केनचिदुत्तमम् ॥ ज्ञायतां काप्यसौ देवी गृह्यतां चासुरेश्वर ॥ ४४ ॥ स्त्रीरत्नमतिचार्वंगी द्योतयंती दिशस्त्विषा ॥ सा तु तिष्ठति दैत्येंद्र तां भवान्द्रष्टुमर्हति ॥ ४५ ॥ यानि रत्नानि मणयो गजाश्वादीनि वै प्रभो ॥ त्रैलोक्ये तु समस्तानि सांप्रतं भांति ते गृहे ॥ ४६ ॥

शक्तिर्योगनिद्रा हरेः स्मृता ॥ " इति । ततः प्रत्यागतया देव्या देवं प्रति कौशिकीमहिमा कथितः । " किं देवेन न सा दृष्टा या सृष्टा कौशिकी मया । तादृशी कन्यका लोके न भूता न भविष्यति ॥ अजातपुंस्पर्शरतिरधृष्या वातिसुंदरी । " इति ॥ ४१ ॥ ततोंऽबिकामिति ॥ परमुत्कृष्टम् ॥ ४२ ॥ ताभ्यामिति ॥ शुंभायेति क्रियायोगे चतुर्थी । कापि अनिर्वाच्या ॥ ४३ ॥ नैवेति ॥ असौ देवी कापि अतो ज्ञायताम् । मनुष्यद्वारा तत्स्वरूपं विचार्यतां गृह्यतां च अंगीक्रियतां च ॥ ४४ ॥ ननु किमर्थमंगीकारस्तस्या इत्यत आह–स्त्रीरत्नमिति ॥ उत्तमस्त्रीत्यर्थः । भवान् तां द्रष्टुमर्हति सा तव दर्शनयोग्या । अतोऽङ्गीक्रियतामिति भावः । तु हेतौ ॥४५॥ यदि सा रत्नभूता कथमस्माकं स्यादत आह–यानीति ॥ यानि गजाश्वादीनि रत्नानि स्वजातिश्रेष्ठानि । तु हेतौ । एवं च समस्तानि समस्तरत्नानि यत-

स्तव गृहे अत इयमपि तव भविष्यतीति भावः ॥ ४६ ॥ तदेव विवृणोति–ऐरावत इति ॥ ४७ ॥ विमानमिति ॥ वेधसो वरप्रदस्यापि यद्विमानमानीतं तदद्भुतम् । एवं च घोर्वर्तिसकलाजय्यत्वं सूचितम् । बलान्न तु दत्तं दत्तवरत्वाच्च तेनोपेक्षितमिति हृदयम् ॥ ४८ ॥ निधिरिति ॥ किंजल्किनीं तन्नामिकां ददावित्यस्य भयादिति शेषः ॥ ४९ ॥ छत्रमिति ॥ कांचनस्त्रावि स्वर्णवर्षणशीलं प्रजापतेर्दक्षस्य अयं रिपूणामजेयः ॥५०॥ मृत्योरिति ॥ उत्क्रांतिर्मरणं परिग्रहे परिजने करणव्युत्पत्त्या हस्ते

ऐरावतः समानीतो गजरत्नं पुरन्दरात् ॥ पारिजाततरुश्चायं तथैवोच्चैःश्रवा हयः ॥ ४७ ॥ विमानं हंससंयुक्तमेतत्तिष्ठति तेंऽगणे ॥
रत्नभूतमिहानीतं यदासीद्वेधसोऽद्भुतम् ॥ ४८ ॥ निधिरेष महापद्मः समानीतो धनेश्वरात् ॥ किंजल्किनीं ददौ चाब्धिर्मालामम्लान-
पंकजाम् ॥ ४९ ॥ छत्रं ते वारुणं गेहे कांचनस्त्रावि तिष्ठति ॥ तथायं स्यंदनवरो यः पुरासीत्प्रजापतेः ॥ ५० ॥ मृत्योरुत्क्रांतिदा
नाम शक्तिरीश त्वया हृता ॥ पाशः सलिलराजस्य भ्रातुस्तव परिग्रहे ॥ ५१ ॥ निशुंभस्याब्धिजाताश्च समस्ता रत्नजातयः ॥
वह्निश्चापि ददौ तुभ्यमग्निशौचे च वाससी ॥५२॥ एवं दैत्येंद्ररत्नानि समस्तान्याहृतानि ते ॥ स्त्रीरत्नमेषा कल्याणी त्वया कस्मान्न
गृह्यते ॥ ५३ ॥ ऋषिरुवाच ॥ निशम्येति वचः शुंभः स तदा चंडमुंडयोः ॥ प्रेषयामास सुग्रीवं दूतं देव्या महासुरम् ॥ ५४ ॥ इति
चेति च वक्तव्या सा गत्वा वचनान्मम ॥ यथा चाभ्येति संप्रीत्या तथा कार्यं त्वया लघु ॥ ५५ ॥

वा ॥ ५१ ॥ निशुंभस्येति ॥ अब्धिजाता रत्नजातयश्च निशुंभस्य परिग्रह इत्यर्थः । अग्निशौचे अग्निरेव नैर्मल्यकरणं ययोरित्यर्थः । कल्पवृक्षोपकल्पितमग्निप्रक्षेपान्नै-र्मलं वासोयुग्ममग्निशौचाख्यमाहुः ॥ ५२ ॥ एवमिति ॥ त इति कर्तुः शेषत्वविवक्षायां षष्ठी ॥ ५३ ॥ ऋषिरुवाच ॥ निशम्येति ॥ सुग्रीवं तन्नामानम् ॥ ५४ ॥ इति चेति चेति ॥ इदं चेत्यर्थः । वक्ष्यमाणस्य परामर्शः । अनेन शुंभनिशुंभयो रजोगुणमयत्वं सूचयति । अत एव तद्वधार्थं सत्त्वगुणप्रधानोऽवतार इति बोध्यम् । लघु

शीघ्रम् ॥ ५५ ॥ स इति ॥ सः दूतः ततः शुंभात्सकाशात् यत्र शैलोद्देशे सा देवी आस्ते तत्र गत्वा श्लक्ष्णमनुत्कटं मधुरया कोमलया गिरा प्राहेत्यन्वयः ॥५६॥ दूत उवाच ॥ देवीति ॥ न केवलं दैत्येश्वर एव किंतु त्रैलोक्यस्य परमेश्वर इत्यर्थः । सकाशं समीपम् ॥५७॥ तदेवोपपादयति–अव्याहतेति ॥ देवयोनिषु देवतासु देवाश्च ते जगद्योनयश्चेत्यर्थात् ॥ ५८ ॥ तदुक्तिमाह–ममेति ॥५९॥ अशेषतः अशेषाणि हृतमित्यन्वयि ॥६०॥ क्षीरोदेति ॥ तदश्वरत्नं दत्त्वा इंद्राद्बलात्कारेण गृहीत्वा अमरैः

स तत्र गत्वा यत्रास्ते शैलोद्देशेऽतिशोभने ॥ सा देवी तां ततः प्राह श्लक्ष्णं मधुरया गिरा ॥ ५६ ॥ दूत उवाच ॥ देवि दैत्येश्वरः शुंभस्त्रैलोक्ये परमेश्वरः ॥ दूतोऽहं प्रेषितस्तेन त्वत्सकाशमिहागतः ॥ ५७ ॥ अव्याहताज्ञः सर्वासु यः सदा देवयोनिषु ॥ निर्जिताखिलदैत्यारिः स यदाह शृणुष्व तत् ॥ ५८ ॥ मम त्रैलोक्यमखिलं मम देवा वशानुगाः ॥ यज्ञभागानहं सर्वानुपाश्नामि पृथक्पृथक् ॥५९॥ त्रैलोक्ये वररत्नानि मम वश्यान्यशेषतः ॥ तथैव गजरत्नं च हृतं देवेंद्रवाहनम् ॥ ६० ॥ क्षीरोदमथनोद्भूतमश्वरत्नं ममामरैः ॥ उच्चैःश्रवससंज्ञं तत्प्रणिपत्य समर्पितम् ॥ ६१ ॥ यानि चान्यानि देवेषु गंधर्वेषूरगेषु च ॥ रत्नभूतानि भूतानि तानि मय्येव शोभने ॥ ६२ ॥ स्त्रीरत्नभूतां त्वां देवि लोके मन्यामहे वयम् ॥ सा त्वमस्मानुपागच्छ यतो रत्नभुजो वयम् ॥ ६३ ॥ मां वा ममानुजं वापि निशुंभमुरुविक्रमम् ॥ भज त्वं चंचलापांगि रत्नभूतासि वै यतः ॥ ६४ ॥ परमैश्वर्यमतुलं प्राप्स्यसे मत्परिग्रहात् ॥ एतद्बुद्ध्या समालोच्य मत्परिग्रहतां व्रज ॥ ६५ ॥

प्रणिपत्य समर्पितमित्यर्थः । उच्चैःश्रवसेत्यत्रापि अजिति योगविभागादच् समासांतः ॥६१॥ यानि चेति ॥ रत्नभूतानि भूतानि रत्नरूपाणि स्थितानीत्यर्थः ॥ ६२ ॥ स्त्रीति ॥ वयमित्यात्मगौरवार्थं बहुवचनम् ॥६३॥ मां वेति ॥ उरुविक्रमं महाविक्रमम् । वै प्रसिद्धौ ॥६४॥ परमेति ॥ प्राप्स्यस इति छांदसस्तङ् । मत्परिग्रहान्मदाश्रयात्

समालोच्य विचार्य मत्परिग्रहतां मत्पत्नीत्वम् ॥ ६५ ॥ ऋषिरुवाच ॥ इत्युक्तेति ॥ अंतःस्मितत्वेन सावहेलमुत्तरं सूचितम् ॥ ६६ ॥ देव्युवाच ॥ सत्यमिति ॥ अत्र शुंभविषये त्रैलोक्याधिपतिरिति समत्वम् ॥ ६७ ॥ किं त्विति ॥ अत्र परिग्रहत्वविषये अल्पबुद्धित्वादिति संभवाय प्रतिज्ञाहानौ च महान्दोषः पापं च पुरुषपरिग्रहे ॥ ६८ ॥ प्रतिज्ञातमाह–यो मामिति ॥ जयति संग्रामातिरिक्तेनापि प्रकारेण संग्रामे यो मे दर्पं बलत्वाभिमानं व्यपोहति यश्च मे प्रतिबलः समानबलः पूर्वपूर्वाभावे

ऋषिरुवाच ॥ इत्युक्ता सा तदा देवी गंभीरांतःस्मिता जगौ ॥ दुर्गा भगवती भद्रा ययेदं धार्यते जगत् ॥६६॥ देव्युवाच ॥ सत्यमुक्तं त्वया नात्र मिथ्या किंचित्त्वयोदितम् ॥ त्रैलोक्याधिपतिः शुंभो निशुंभश्चापि तादृशः॥६७॥ किं त्वत्र यत्प्रतिज्ञातं मिथ्या तत्क्रियते कथम् ॥ श्रूयतामल्पबुद्धित्वात्प्रतिज्ञा या कृता पुरा॥६८॥ यो मां जयति संग्रामे यो मे दर्पं व्यपोहति ॥ यो मे प्रतिबलो लोके स मे भर्ता भविष्यति॥६९॥ तदागच्छतु शुंभोऽत्र निशुंभो वा महासुरः॥ मां जित्वा किं चिरेणात्र पाणिं गृह्णातु मे लघु ॥ ७० ॥ दूत उवाच॥ अवलिप्तासि मैवं त्वं देवि ब्रूहि ममाग्रतः॥ त्रैलोक्ये कः पुमांस्तिष्ठेदग्रे शुंभनिशुंभयोः॥७१॥ अन्येषामपि दैत्यानां सर्वे देवा न वै युधि ॥ तिष्ठंति संमुखे देवि किं पुनः स्त्री त्वमेकिका ॥७२॥ इंद्राद्याःसकला देवास्तस्थुर्येषां न संयुगे ॥ शुंभादीनां कथं तेषां स्त्री प्रयास्यसि संमुखम् ॥७३॥ सा त्वं गच्छ मयैवोक्ता पार्श्वं शुंभनिशुंभयोः ॥ केशाकर्षणनिर्धूतगौरवामागमिष्यसि ॥ ७४ ॥

उत्तरः तादृशश्च तत्त्वज्ञ एवेति गूढ आशयः ॥ ६९ ॥ तदिति ॥ पाणिग्रहणात्पूर्वं मम गमनमनुचितामिति भावः ॥ ७० ॥ दूत उवाच ॥ अवलिप्तेति ॥ अवलेपो गर्वः एवं प्रागुक्तं यदग्रे पुमानपि न तिष्ठेत् तदग्रे स्त्री न तिष्ठेदेवेति भावः ॥ ७१ ॥ नन्वहं देवीत्यतः स्थास्यामीत्यत आह–अन्येषामपीति द्वाभ्याम् ॥ एकिकेति कुत्सायामकच् ॥ ७२ ॥ ७३ ॥ उपसंहरति–सा त्वमिति ॥ मयैवेत्यनेनानागमनेन तेषां सर्वेषां दुष्टतया गौरवं न तिष्ठेदित्यर्थः । तदेव विपक्षे बाधकमाह । केशाकर्षणेन

निर्धूतं खंडितं गौरवं यस्यास्तादृशी मा गमिष्यसि । अङित् मा नञर्थः सकाकुश्च ॥ ७४ ॥ देव्युवाच ॥ एवमेतदिति ॥ सोपहासं यत् यतः प्रतिज्ञेत्यस्य कृतेति शेषः ॥ ७५ ॥ स त्वमिति ॥ मया यदेतदुक्तं तत्सर्वमादृतः सन् तस्मै आचक्ष्व सः युक्तं तत्करोतु चेत्यन्वयः । आदृत इत्यनेनान्यूनानतिरिक्तं वदेति सूच्यते ॥ ७६ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने पंचमोऽध्यायः ॥ ५ ॥ ऋषिरुवाच ॥ इतीति ॥ अमर्षः कोपः समाचष्ट उक्तवान् ॥ १ ॥

देव्युवाच ॥ एवमेतद्बली शुंभो निशुंभश्चातिवीर्यवान् ॥ किं करोमि प्रतिज्ञा मे यदनालोचिता पुरा ॥ ७५ ॥ स त्वं गच्छ मयोक्तं ते यदेतत्सर्वमादृतः ॥ तदाचक्ष्वासुरेंद्राय स च युक्तं करोतु तत् ॥७६॥ इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये देव्या दूतसंवादो नाम पंचमोऽध्यायः ॥ ५ ॥ ऋषिरुवाच ॥ इत्याकर्ण्य वचो देव्याः स दूतोऽमर्षपूरितः ॥ समाचष्ट समागम्य दैत्यराजाय विस्तरात् ॥१॥ तस्य दूतस्य तद्वाक्यमाकर्ण्यासुरराट् ततः ॥ सक्रोधः प्राह दैत्यानामधिपं धूम्रलोचनम् ॥२॥ हे धूम्रलोचनाशु त्वं स्वसैन्यपरिवारितः ॥ तामानय बलाद्दुष्टां केशाकर्षणविह्वलाम् ॥३॥ तत्परित्राणदः कश्चिद्यदि वोत्तिष्ठतेऽपरः ॥ स हंतव्योऽमरो वापि यक्षो गंधर्व एव वा ॥४॥ ऋषिरुवाच ॥ तेनाज्ञप्तस्ततः शीघ्रं स दैत्यो धूम्रलोचनः ॥ वृतः षष्ट्या सहस्राणामसुराणां द्रुतं ययौ ॥५॥ स दृष्ट्वा तां ततो देवीं तुहिनाचलसंस्थिताम् ॥ जगादोच्चैः प्रयाहीति मूलं शुंभनिशुंभयोः ॥ ६ ॥ न चेत्प्रीत्याद्य भवती मद्भर्तारमुपैष्यति ॥ ततो बलान्नयाम्येष केशाकर्षणविह्वलाम् ॥ ७ ॥



तस्येति ॥ दैत्यानामधिपं सेनापतिम् ॥ २ ॥ हे इति ॥ दुष्टां दुर्वचनाम् । विह्वलामाकुलाम् ॥३॥४॥ ऋषिरुवाच ॥ तेनेति ॥ सहस्राणामसुराणां षष्ट्या वृत इत्यन्वयः ॥ ५ ॥ स दृष्ट्वेति ॥ तुहिनं हिमम् । मूलं समीपम् ॥६॥ विपक्षे बाधकमाह–न चेदिति ॥ तर्हीत्यर्थः ॥ ७ ॥

देव्युवाच ॥ दैत्येश्वरेणेति ॥ एवं केशाकर्षणविह्वलां बलात् सामर्थ्यसत्ता अवशता च । सावष्टंभोक्तिरेषा ॥ ८ ॥ ऋषिरुवाच ॥ इतीति ॥ तं सा भस्मचकारेत्यन्वयः ॥ ९ ॥ अथेति ॥ अंबिका कर्त्री अत एव तथा स्वारस्यम् ॥ १० ॥ निर्नायकसैन्ये देव्याः प्रयासो व्यर्थ इति मत्वा सिंहो युयुधे-तत इति ॥ तत्र हेतुगर्भविशेषणम् । स्ववाहन इति अर्धर्चादित्वात्पुंस्त्वम् । स्वीयवाहनमित्यर्थः । पपात प्राविशत् ॥ ११ ॥ कांश्चिदिति ॥ स सिंहः आक्रांतिराक्रमणं तेन च अधरेणअधरकायेनाधरोष्ठेन

देव्युवाच ॥ दैत्येश्वरेण प्रहितो बलवान् बलसंवृतः ॥ बलान्नयसि मामेवं ततः किं ते करोम्यहम् ॥ ८ ॥ ऋषिरुवाच ॥ इत्युक्तः सोऽभ्यधावत्तामसुरो धूम्रलोचनः ॥ हुंकारेणैव तं भस्म सा चकारांबिका ततः ॥ ९ ॥ अथ क्रुद्धं महासैन्यमसुराणां तथाम्बिका ॥ ववर्ष सायकैस्तीक्ष्णैस्तथा शक्तिपरश्वधैः॥ १० ॥ ततो धुतसटः कोपात्कृत्वा नादं सुभैरवम् ॥ पपातासुरसेनायां सिंहो देव्याः स्ववाहनः ॥११॥ कांश्चित्करप्रहारेण दैत्यानास्येन चापरान् ॥ आक्रान्त्या चाधरेणान्यान्स जघान महासुरान् ॥१२॥ केषांचित्पाटयामास नखैः कोष्ठानि केसरी ॥ तथा तलप्रहारेण शिरांसि कृतवान् पृथक् ॥१३॥ विच्छिन्नबाहुशिरसः कृतास्तेन तथापरे ॥ पपौ च रुधिरं कोष्ठादन्येषां धुतकेसरः ॥१४॥ क्षणेन तद्बलं सर्वं क्षयं नीतं महात्मना ॥ तेन केसरिणा देव्या वाहनेनातिकोपिना ॥१५॥ श्रुत्वा तमसुरं देव्या निहतं धूम्रलोचनम् ॥ बलं च क्षयितं कृत्स्नं देवीकेसरिणा ततः ॥१६॥ चुकोप दैत्याधिपतिः शुंभः प्रस्फुरिताधरः ॥ आज्ञापयामास च तौ चंडमुंडौ महासुरौ ॥१७॥ हे चंड हे मुंड बलैर्बहुभिः परिवारितौ ॥ तत्र गच्छत गत्वा च सा समानीयतां लघु ॥ १८ ॥

च अन्यान् महासुरान् दैत्यान् जघानेत्यन्वयः ॥१२॥ केषामिति ॥ कोष्ठानि तु उदरमध्यानि । तलो विस्तृतांगुलिः पाणिः ॥१३॥१४॥१५॥ श्रुत्वेति ॥ क्षयितमिति क्षयशब्दादाख्यातसन्नंतात् क्तः । कृतक्षयमिति ॥१६॥ तौ पूर्वौ ॥१७॥ हे चंडेति॥ बहुलैर्बहुभिरित्यर्थः। गच्छत गच्छतं छंदोनुरोधाद्बिंदुलोपः। लघु शीघ्रम्॥१८॥

आनयने प्रकारद्वयमाह—केशेष्विति ॥ आकर्षणमात्रादनागमने बंधनं च इति गौरवाद्बहुवचनम् । तृतीया सहार्थे । युधि युद्धे प्रसक्ते यदि तथानयने संदेहस्तदा सर्वैर्दैत्यैः सकलायुधैः सा विशेषेण निहन्यतां मार्यतामित्यर्थः ॥ १९॥ उपसंहरति—आगम्यतामित्यंतेन । सर्वथा ग्रहीतुमशक्या चेदेवं हंतव्या नान्यथेत्याह । बद्धेति । अथेति पक्षांतरे । यदा शक्यते तर्हि बद्धा तां गृहीत्वैवागंतव्यमित्यर्थः ॥ २० ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने षष्ठोऽध्यायः ॥ ६ ॥

केशेष्वाकृष्य बद्धा वा यदि वः संशयो युधि ॥ तदाशेषायुधैः सर्वैरसुरैर्विनिहन्यताम् ॥ १९ ॥ तस्यां हतायां दुष्टायां सिंहे च विनिपातिते ॥ शीघ्रमागम्यतां बद्धा गृहीत्वा तामथांबिकाम् ॥ २० ॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये धूम्रलोचनवधो नाम षष्ठोऽध्यायः ॥ ६ ॥ ऋषिरुवाच ॥ आज्ञप्तास्तु ततो दैत्याश्चंडमुंडपुरोगमाः ॥ चतुरंगबलोपेता ययुरभ्युद्यतायुधाः ॥१॥ ददृशुस्ते ततो देवीमिषद्धासां व्यवस्थिताम् ॥ सिंहस्योपरि शैलेंद्रशृंगे महति कांचने ॥ २ ॥ ते दृष्ट्वा तां समादातुमुद्यमं चक्रुरुद्यताः ॥ आकृष्टचापासिधरास्तथान्ये तत्समीपगाः ॥ ३ ॥ ततः कोपं चकारोच्चैरंबिका तानरीन्प्रति ॥ कोपेन चास्या वदनं मषीवर्णमभूत्तदा ॥ ४ ॥ भ्रुकुटी कुटिला तस्या ललाटफलकाद् द्रुतम् ॥ काली करालवदना विनिष्क्रांतासिपाशिनी ॥ ५ ॥

ऋषिरुवाच॥ आज्ञप्ता इति ॥१॥ ददृशुरिति ॥ शैलेंद्रशृंगे हिमाचलशृंगे । सिंहस्योपरि स्थितामित्यन्वयः॥२॥ ते इति॥ चंडादयः प्रधानाः समादातुं ग्रहीतुमुद्यमसुद्योगम् । उद्यताः उत्साहवंतः । आकृष्टं आकर्णांतकृष्टं चापं यैस्ते कोशोद्धृतासयश्च तत्समीपगाः ग्रहीतुमुद्यतानां रक्षणार्थं समीपगा इत्यर्थः। अनेन चंडादीनां तामसत्वं सूचितम् ॥ ३ ॥ अतस्तद्वधार्थं तामसीप्रादुर्भावमाह—तत इति ॥ मषी लिपिसाधनद्रव्यं यद्वत् श्यामवर्णं निःसरमाणकालीप्रतिबिंबादिति भावः ॥ ४ ॥ भ्रुकुटीति ॥ तस्याः कुपितदेव्या विनिष्क्रांता निःसृता ॥ ५ ॥

विचित्रेति ॥ खट्वांगं पट्टिका कंकालपंजरं वा । नरमालेत्यत्र नरशब्दस्तन्मुंडे लाक्षणिकः । द्वीपी व्याघ्रः शुष्कमांसा निर्मांसदेहा अतः एवातिभैरवा ॥ ६ ॥ अतीति ॥ अतिशयितो विस्तारो यस्य तादृशं वदनं यस्या इत्यर्थः । ललनं चालनं निमग्नानि निम्नप्रविष्टानि आरक्तानि नयनानि यस्यास्त्रिनेत्रत्वात् ॥ ७ ॥ ८ ॥ पार्ष्णीति ॥ पार्ष्णिग्राहो गजपार्ष्णिरक्षकः । अंकुशग्राही महामात्रः । योधो गजारूढो वीरः ॥ ९ ॥ तथैवेति ॥ योधमिति जातावेकवचनम् । एवं रथमपरमन्य-

विचित्रखट्वांगधरा नरमालाविभूषणा ॥ द्वीपिचर्मपरीधाना शुष्कमांसातिभैरवा ॥ ६ ॥ अतिविस्तारवदना जिह्वाललनभीषणा ॥ निमग्ना रक्तनयना नादापूरितदिङ्मुखा ॥७॥ सा वेगेनाभिपतिता घातयन्ती महासुरान् ॥ सैन्ये तत्र सुरारीणामभक्षयत तद्बलम् ॥८॥ पार्ष्णिग्राहांकुशग्राहियोधघंटासमन्वितान् ॥ समादायैकहस्तेन मुखे चिक्षेप वारणान् ॥ ९ ॥ तथैव योधं तुरगै रथं सारथिना सह ॥ निक्षिप्य वक्त्रे दशनैश्चर्वयंत्यतिभैरवम् ॥ १० ॥ एकं जग्राह केशेषु ग्रीवायामथ चापरम् ॥ पादेनाक्रम्य चैवान्यमुरसान्यमपोथयत् ॥ ११ ॥ तैर्मुक्तानि च शस्त्राणि महास्त्राणि तथासुरैः ॥ मुखेन जग्राह रुषा दशनैर्मथितान्यपि ॥ १२ ॥ बलिनां तद्बलं सर्वमसुराणां महात्मनाम् ॥ ममर्दाभक्षयच्चान्यानन्यांश्चाताडयत्तथा ॥ १३ ॥ असिना निहताः केचित्केचित्खट्वांगताडिताः ॥ जग्मुर्विनाशमसुरा दंताग्राभिहतास्तथा ॥ १४ ॥ क्षणेन तद्बलं सर्वमसुराणां निपातितम् ॥ दृष्ट्वा चंडोऽभिदुद्राव तां कालीमतिभीषणाम् ॥ १५ ॥ शरवर्षैर्महाभीमैर्भीमाक्षीं तां महासुरः ॥ छादयामास चक्रैश्च मुंडः क्षिप्तैः सहस्रशः ॥ १६ ॥

मित्यादानम् । चर्वयंती वर्तमानसामीप्ये भूते लट् । अतिभैरवमिति क्रियाविशेषणम् ॥ १० ॥ एकमिति ॥ अपोथयत् अवधीत् ॥ ११ ॥ तैरिति ॥ मथितान्यपि मथितानि चकारेत्यन्वयः ॥ १२ ॥ बलिनामिति ॥ महात्मनां महादेहानाम् ॥ १३ ॥ १४ ॥ १५ ॥ शरवर्षैरिति ॥ चंडः शरवर्षैः मुंडः सहस्रशः क्षिप्तै-

श्चक्रैः छादयामास इत्यन्वयः । एवं पूर्वश्लोके चंडग्रहणं मुंडस्याप्युपलक्षणम् ॥ १६ ॥ तानीति ॥ मुखं विशमानानि च । घनोदरं विशमानान्यर्कबिंबानीव बभुः । शानच् छांदसः ॥ १७ ॥ तत इति ॥ भीममिति क्रियाविशेषणम् । वक्त्रांते वक्त्रमध्ये विकटदंतत्वात् । दुर्दर्शाः ये दशनाः तेषां तेजसा उज्ज्वला तेजोमया ॥ १८ ॥ उत्थाय चेति ॥ महासिं महाखड्गमुत्थाय उत्थाप्य उद्यमसकोपवारणं यथा स्यात्तथा हमित्युक्त्वा देवी चंडमधावत अस्य चंडस्य तेनोद्यतेन ॥ १९ ॥ अथेति ॥

तानि चक्राण्यनेकानि विशमानानि तन्मुखम् ॥ बभुर्यथार्कबिंबानि सुबहूनि घनोदरम् ॥ १७ ॥ ततो जहासातिरुषा भीमं भैरवनादिनी ॥ काली करालवक्त्रांतदुर्दर्शदशनोज्ज्वला ॥ १८ ॥ उत्थाय च महासिं हं देवी चंडमधावत ॥ गृहीत्वा चास्य केशेषु शिरस्तेनासिनाच्छिनत् ॥ १९ ॥ अथ मुंडोऽभ्यधावत्तां दृष्ट्वा चंडं निपातितम् ॥ तमप्यपातयद्भूमौ सा खड्गाभिहतं रुषा ॥ २० ॥ हतशेषं ततः सैन्यं दृष्ट्वा चंडं निपातितम् ॥ मुंडं च सुमहावीर्यं दिशो भेजे भयातुरम् ॥२१॥ शिरश्चंडस्य काली च गृहीत्वा मुण्डमेव च ॥ प्राह प्रचंडाट्टहासमिश्रमभ्येत्य चंडिकाम् ॥ २२ ॥ मया तवात्रोपहृतौ चण्डमुंडौ महापशू ॥ युद्धयज्ञे स्वयं शुंभं निशुंभं च हनिष्यसि ॥ २३ ॥ ऋषिरुवाच ॥ तावानीतौ ततो दृष्ट्वा चंडमुंडौ महासुरौ ॥ उवाच कालीं कल्याणी ललितं चंडिका वचः ॥ २४ ॥ यस्माच्चंडं च मुंडं च गृहीत्वा त्वमुपागता ॥ चामुंडेति ततो लोके ख्याता देवी भविष्यसि ॥ २५ ॥

खड्गादिभिर्हतं पूर्वोद्यतखड्गाभिहतमस्य शिरो न च्छिन्नं खड्गप्रहारमात्रम् ॥ २० ॥ २१ ॥ शिर इति ॥ मुंडं सशिरस्कं सदेहमित्यर्थः । प्रचंडाट्टहासेन मिश्रं युक्तं यथा भवति तथा । चंडिकां यल्ललाटफलकान्निर्गता तां देवीं प्राहेत्यर्थः ॥ २२ ॥ मयेति ॥ अत्र युद्धयज्ञे महापशू इति रूपकम् । उपहृतौ प्रधानांगद्वारेण चंडस्योपहारः ॥२३॥ ऋषिरुवाच ॥ ताविति ॥ कालीं ललाटभवां कल्याणीति कर्तृविशेषणम् । चंडिका कौशिकी ॥२४॥ यस्मादिति ॥ चंडं शिरोद्वारा हे देवि, ख्या-

ता भविष्यसीत्यन्वयः । चामुंडेति पृषोदरादित्वात्साधुः । अनेनेयं तामसी कौशिकीजन्या काली कौशिकी नियम्या भवतीत्याहुः ॥ २९ ॥ इति शिवभट्टसुतनागोजीभट्टकृते सप्तशतीव्याख्याने सप्तमोऽध्यायः ॥ ७ ॥ चंडे इति ॥ क्षयितेषु कृतक्षयेषु ॥ १ ॥ तत इति ॥ तेषां वधजकोपेनास्वाधीनचेताः अत एव स्त्रीवधेऽप्यस्य प्रवृत्तिरिति भावः । सर्वसैन्यानामिति दैत्यानां विशेषणम् ॥ २ ॥ अद्येति ॥ उदायुधास्तत्संज्ञकाश्च कंबूनां तन्नाम्नां चतुरशीतिर्दैत्या इति शेषः ॥ ३ ॥ कोटीति ॥

इति मार्कण्डेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये चंडमुंडवधो नाम सप्तमोऽध्यायः॥७॥ ऋषिरुवाच ॥ चंडे च निहते दैत्ये मुण्डे च विनिपातिते ॥ बहुलेषु च सैन्येषु क्षयितेष्वसुरेश्वरः॥१॥ ततः कोपपराधीनचेताः शुम्भः प्रतापवान् ॥ उद्योगं सर्वसैन्यानां दैत्यानामादिदेश ह ॥ २ ॥ अद्य सर्वबलैर्दैत्याः षडशीतिरुदायुधाः ॥ कंबूनां चतुराशीतिर्निर्यान्तु सबलैर्वृताः ॥ ३॥ कोटिवीर्याणि पंचाशदसुराणां कुलानि वै॥ शतं कुलानि धौम्राणां निर्गच्छन्तु ममाज्ञया॥४॥कालका दौर्हृदा मौर्याः कालकेयास्तथासुराः॥युद्धाय सज्जा निर्यांतु आज्ञया त्वरिता मम ॥५॥ इत्याज्ञाप्यासुरपतिः शुम्भो भैरवशासनः ॥ निर्जगाम महासैन्यसहस्रैर्बहुभिर्वृतः ॥ ६ ॥ आयातं चण्डिका दृष्ट्वा तत्सैन्यमतिभीषणम् ॥ ज्यास्वनैः पूरयामास धरणीगगनांतरम् ॥७ ॥ ततः सिंहो महानादमतीव कृतवान्नृप ॥ घण्टास्वनेन तं नादमंबिका चोपबृंहयत् ॥८॥ धनुर्ज्यासिंहघण्टानां नादापूरितदिङ्मुखा ॥ निनादैर्भीषणैः काली जिग्ये विस्तारितानना ॥९॥

कोटिवीर्याणि तन्नामानि । धौम्राः धूम्रवंश्याः ॥ ४ ॥ कालकाः तन्नामानः दौर्हृदाः दुर्हृदोऽपत्यानि मौर्याः तन्नामानः तथा कालकाया अपत्यानि कालकेयाः असुराः सज्जाः ससामग्रीकाः ॥ ५ ॥ इतीति ॥ भैरवमुग्रम् ॥ ६ ॥ आयातामिति ॥ आगतमित्यर्थः । अंतरं मध्यम् ॥ ७ ॥ तत इति ॥ तन्नादानिति बहुवचनं महानादमित्येकत्वाविवक्षया अतीवेत्यस्यानेकवारामित्यर्थे वा । उपबृंहयादित्यत्रागमशास्त्रस्यानित्यत्वात् अडभावः ॥ ८ ॥ धनुरिति ॥ नादैः स्वीयैरापूरितादिङ्मुखा

काली धनुर्ज्यासिंहघंटानां भीषणैर्नादैर्जिग्ये जिता देव्या धनुरादिशब्दैः कालीशब्दो जित इति भावः ॥ ९ ॥ तामिति ॥ काली चंडीललाटजा । सरोषैः सक्रोधैः ॥ १० ॥ एतस्मिन्निति ॥ देवीदानवसंपातावसरे भवाय संपदे ॥ ११ ॥ ब्रह्मेति ॥ विष्णुशब्देन वाराहनृसिंहावपि । शक्तयः स्वातिरेकिण्यो देवताः । शक्तिशक्तिमतोस्तादात्म्यात् ॥१२॥ ब्रह्मादिरूपैरित्यर्थकं तद्रूपैरिति व्याचष्टे–यस्येति ॥ तद्वत् तथाविधरूपभूषणवाहनेत्यर्थः ॥१३॥ हंसेति ॥ विमानाग्रे इत्यस्यास्थितेति शेषः ।

तं निनादमुपश्रुत्य दैत्यसैन्यैश्चतुर्दिशम् ॥ देवीसिंहस्तथा काली शरौघैः परिवारिताः ॥ १० ॥ एतस्मिन्नंतरे भूप विनाशाय सुरद्विषाम् ॥ भवायामरसिंहानामतिवीर्यबलान्विताः ॥११॥ ब्रह्मेशगुहविष्णूनां तथेंद्रस्य च शक्तयः ॥ शरीरेभ्यो विनिष्क्रम्य तद्रूपैश्चण्डिकां ययुः ॥ १२ ॥ यस्य देवस्य यद्रूपं यथा भूषणवाहनम् ॥ तद्वदेव हि तच्छक्तिरसुरान्योद्धुमाययौ ॥ १३ ॥ हंसयुक्तविमानाग्रे साऽक्षसूत्रकमण्डलुः ॥ आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साभिधीयते ॥ १४ ॥ माहेश्वरी वृषारूढा त्रिशूलवरधारिणी ॥ महाहिवलया प्राप्ता चन्द्ररेखा विभूषणा ॥ १५ ॥ कौमारी शक्तिहस्ता च मयूरवरवाहना ॥ योद्धुमभ्याययौ दैत्यानंबिका गुहरूपिणी ॥ १६ ॥ तथैव वैष्णवी शक्तिर्गरुडोपरि संस्थिता ॥ शंखचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ ॥ १७ ॥

अक्षसूत्रं पद्ममाला । ब्रह्माणी ब्रह्माणमानयति वेष्टयतीति व्युत्पत्त्यायं शब्दः साधुः ॥ १४ ॥ माहेश्वरीति ॥ महाऽही तक्षकानंतौ वलयौ चंद्ररेखा चंद्रकला सैव विभूषणं यस्याः ॥ १५ ॥ कौमारीति ॥ गुहरूपिणी गुहसमानाकारा कुमारसंबंधिनी शक्तिराययावित्यर्थान्न पौनरुक्त्यम् । ऐंद्रीत्युक्तापि यथा शक्रस्तथैव सेतिवत् अंबिकापदेन गुहस्य शिवव्यूहत्वं सूचयति ॥ १६ ॥ तथैवेति ॥ अत्र शार्ङ्गपदेन बाणोऽप्युपलक्ष्यते । " बाहुभिर्गरुडारूढा शंखचक्रगदासिनी । शार्ङ्गबाणधरा जाता वैष्णवी रूपशालिनी ॥ " इति वामनपुराणात् एतेनास्याः षड्भुजात्वं सूचितम् ॥ १७ ॥

यज्ञेति ॥ यज्ञांगकल्पितं वराहाकारं विभ्रतो हरेरित्यनेनास्याः विष्णुत्वमेवेति सूचितम् । एवं नृसिंहोऽपि । न चैवं कालीपुराणे शरभवराहयुद्धे विष्णोः शरभपक्षपातित्वं वराहबलहारकत्वमुक्तं नृसिंहस्य च वराहानुयायित्वमुक्तं विरुध्येतेति वाच्यम् । तस्य लीलामात्रत्वात् ॥१८॥१९॥ वज्रेति ॥ यथा शक्र इत्याकारपरम् । एवं च सर्वासु तदाकारता द्रष्टव्या । गजराज ऐरावतः ॥ २० ॥ अतिविशिष्टतेजसः कौशिक्याः सविधे गंतुमशक्तस्ता देवशक्तीरीशानो देव्यै दर्शितवानित्याह–तत इति ॥ ताभिः परिवृतः ईशानः मम प्रीत्या एताभिर्देवशक्तिभिः सहासुरा हन्यंतामिति चंडिकामाहेत्यन्वयः । स्वशक्तेः पार्वत्याः प्रादुर्भूतत्वेन धृष्टतया ईशान एव तथोक्तवानिति भावः । अंडाधिकारिण इमे ब्रह्मादयः अंडांतराधिकारिणां शुंभादिजितत्वेन धृष्टत्वासंभवात् ॥२१॥ स्वस्यापि सहायप्रदर्शनेनैषा दृष्टा भगवती तस्योत्तरं नाह

यज्ञवाराहमतुलं रूपं या बिभ्रती हरेः ॥ शक्तिः साप्याययौ तत्र वाराहीं बिभ्रती तनुम् ॥ १८ ॥ नारासिंही नृसिंहस्य बिभ्रती सदृशं वपुः ॥ प्राप्ता तत्र सटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥ १९ ॥ वज्रहस्ता तथैवैंद्री गजराजोपरि स्थिता ॥ प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा ॥२०॥ ततः परिवृतस्ताभिरीशानो देवशक्तिभिः॥हन्यंतामसुराः शीघ्रं मम प्रीत्याह चंडिकाम् ॥२१॥ ततो देवीशरीरात्तु विनिष्क्रांतातिभीषणा ॥ चंडिका शक्तिरत्युग्रा शिवाशतनिनादिनी ॥ २२ ॥ सा चाह धूम्रजटिलमीशानमपराजिता ॥ दूत त्वं गच्छ भगवन्पार्श्वं शुंभनिशुंभयोः ॥२३॥ ब्रूहि शुंभं निशुंभं च दानवावतिगर्वितौ ॥ ये चान्ये दानवास्तत्र युद्धाय समुपस्थिताः ॥ २४ ॥

किंतु काचिन्न शक्तिरित्याह–तत इति ॥ अतिभीषणा दर्शनमात्राद्भयकरी अत्युग्रा रौद्रस्वभावा शिवानां शृगालीनां शतेन निनादिनी । शतशब्दोऽनंतवाची । निनदनंताशिवावृता॥२२॥ सा चेति॥ धूम्रजटिलं धूम्रवर्णजटावंतमपराजिता तदाख्या अपरैरजिता च। दूतभावं वार्तावहत्वं गच्छ शुंभनिशुंभयोः पार्श्वे च गच्छेत्यन्वयः। आहेति निपातः कालमात्रे। तेनाब्रवीदित्यर्थः । त्रिमूर्त्यंतशिवापेक्षया यस्याः कौशिक्यास्तत्प्रादुर्भावकसमक्षतया आधिक्येन तस्य दूत्येतत्प्रेषणं नानुचितम् ॥२३॥ ब्रूहीति ॥ ये च तत्र शुंभांतिकेऽन्ये दानवास्तांश्च ब्रूहीत्यन्वयः । युद्धाय युद्धं कर्तुम् ॥ २४ ॥

वचनमाह–त्रैलोक्यमिति ॥ स्पष्टम् ॥ २५ ॥ बलेति ॥ अवलेपो गर्वः मच्छिवाः या मया सह निनदंत्यः प्रादुर्भूताः । पिशितं मांसम् ॥ २६ ॥ यत इति ॥ दूत्यमेव दौत्यम् । प्रज्ञाद्यण् । शिवदूती गौरादित्वात् ङीप् । अस्वांगपूर्वपदादिति वा ॥२७॥ तेऽपीति ॥ वा अमर्षेण सर्वतः पूरिताः यतः यं देशमाक्रम्य कात्यायनी स्थिता तं देशं जग्मुरित्यन्वयः । मूलशक्त्यभेदे तस्या अपि कात्यायनीत्वोक्तिः ॥ २८ ॥ तत इति ॥ प्रथममादौ अग्रे संमुखे । ववर्षुरिति गुणश्छांदसः । उद्धतः प्रकटः ।

त्रैलोक्यमिंद्रो लभतां देवाः संतु हविर्भुजः ॥ यूयं प्रयात पातालं यदि जीवितुमिच्छथ ॥ २५ ॥ बलावलेपादथ चेद्भवंतो युद्धकांक्षिणः ॥ तदागच्छत तृप्यंतु मच्छिवाः पिशितेन वः ॥ २६ ॥ यतो नियुक्तो दौत्येन तया देव्या शिवः स्वयम् ॥ शिवदूतीति लोकेऽस्मिंस्ततः सा ख्यातिमागता ॥२७॥ तेऽपि श्रुत्वा वचो देव्याः शर्वाख्यातं महासुराः ॥ अमर्षापूरिता जग्मुर्यत्र कात्यायनी स्थिता ॥ २८ ॥ ततः प्रथममेवाग्रे शरशक्त्यृष्टिवृष्टिभिः ॥ ववर्षुरुद्धतामर्षास्तां देवीममरारयः ॥ २९ ॥ सा च तान्प्रहितान्बाणाञ्छूलशक्तिपरश्वधान् ॥ चिच्छेद लीलया ध्मातधनुर्मुक्तैर्महेषुभिः ॥३०॥ तस्याग्रतस्तथा काली शूलपातविदारितान् ॥ खट्वांगपोथितांश्चारीन्कुर्वंती व्यचरत्तदा ॥ ३१ ॥ कमंडलुजलाक्षेपहतवीर्यान्हतौजसः ॥ ब्रह्माणी चाऽकरोच्छत्रून्येन येन स्म धावति ॥ ३२ ॥ माहेश्वरी त्रिशूलेन तथा चक्रेण वैष्णवी ॥ दैत्याञ्जघान कौमारी तथा शक्त्यातिकोपना ॥ ३३ ॥

अनेन स्त्री प्रथमतो हंतुमयोग्येति विवेकराहित्येन रौद्राविष्टत्वं सूचितम् ॥ २९ ॥ ३० ॥ तस्येति ॥ तस्या अग्रत इति च्छेदः । छांदसः संधिः । तथा चंडीवत् तदा देव्या शस्त्रच्छेदः । खट्वांगं कंकालपंजरं पट्टिका वा । काली ललाटजा कुर्वंती नुत्तशास्त्राभावात् ( ? ) ॥३१॥ कमंडल्विति ॥ आक्षेपः वीर्यं बलं हततेजसः धावतीति स्मयोगे भूते लट् । येन येन प्रदेशेन ॥ ३२ ॥ माहेश्वरीति ॥ स्पष्टम् ॥ ३३ ॥

ऐंद्रीति ॥ दैत्यदानवयोर्मातृतो भेदः । ऐन्द्याः कुलिशपातेनेत्यर्थः ॥ ३४ ॥ तुंडेति ॥ वाराही चासौ मूर्तिश्च वाराहमूर्तिस्तया चक्रेणेत्यनेन वाराह्या मुखमेव वराहसदृशं न त्वन्यत् । एवं शक्तिमतो वराहस्यापि बोध्यम् ॥ ३५ ॥ नखैरिति ॥ आजौ रणे । अंबरमाकाशम् ॥ ३६ ॥ चंडेति ॥ चंड उत्कटः सकोपो वा शिवदूत्यभिदूषिता इति तृतीयासमासः । प्रापितमूर्च्छा सा शिवदूती ॥ ३७ ॥ इति पूर्वोक्तैरभ्युपायैः संग्रामसाधनैः दैत्यान्मर्दयंतं मातृगणं दृष्ट्वा नेशुः पलायिता इत्यन्वयः ।

ऐंद्री कुलिशपातेन शतशो दैत्यदानवाः ॥ पेतुर्विदारिताः पृथ्व्यां रुधिरौघप्रवर्षिणः ॥ ३४ ॥ तुंडप्रहारविध्वस्ता दंष्ट्राग्रक्षतवक्षसः ॥ वाराहमूर्त्या न्यपतंश्चक्रेण च विदारिताः ॥३५॥ नखैर्विदारितांश्चान्यान्भक्षयंती महासुरान् ॥ नारसिंही चचाराजौ नादापूर्णदिगंबरा ॥ ३६ ॥ चंडाट्टहासैरसुराः शिवदूत्यभिदूषिताः ॥ पेतुः पृथिव्यां पतितांस्तांश्चखादाथ सा तदा ॥३७॥ इति मातृगणं क्रुद्धं मर्दयंतं महासुरान् ॥ दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारिसैनिकाः॥३८॥ पलायनपरान्दृष्ट्वा दैत्यान्मातृगणार्दितान् ॥ योद्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुरः ॥ ३९ ॥ रक्तबिंदुर्यदा भूमौ पतत्यस्य शरीरतः ॥ समुत्पतति मेदिन्यास्तत्प्रमाणस्तदासुरः ॥ ४०॥ युयुधे स गदापाणिरिंद्रशक्त्या महासुरः॥ ततश्चैंद्री स्ववज्रेण रक्तबीजमताडयत् ॥४१॥ कुलिशेन हतस्याशु बहु सुस्राव शोणितम् ॥ समुत्तस्थुस्ततो योधास्तद्रूपास्तत्पराक्रमाः ॥ ४२ ॥ यावंतः पतितास्तस्य शरीराद्रक्तबिंदवः ॥ तावंतः पुरुषा जातास्तद्वीर्यबलविक्रमाः ॥ ४३ ॥

ब्रह्माण्याद्या अष्ट मातरः । " ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही नारसिंह्यैंद्री चामुंडा मातरः स्मृताः ॥ " इति डामरतंत्रे नवार्णविधाने उक्ताः ॥ ३८ ॥ पलायनेति ॥ रक्तं बीजं कारणं यस्य स रक्तबीजः ॥ ३९ ॥ तदेवाह–रक्तेति ॥ अस्य रक्तबीजस्य मेदिन्याः मेदिन्यां स्थित्वेत्यर्थः । ल्यब्लोपे पंचमी ॥ ४० ॥ स रक्तबीजः ॥ ४१ ॥ कुलिशेनेति ॥ तस्य रक्तबीजस्य ॥ ४२ ॥ यावंत इति ॥ वीर्यं प्रभावः बलं शारीरं विक्रमः उत्साहरूपः ॥ ४३ ॥

त इति ॥ समं सह । अत्युग्रेति शस्त्रविशेषणं समस्तम् ॥ ४४ ॥ पुनश्चेति ॥ ववाहेति वहिर्गतावित्यस्य रूपम् ॥४५॥ वैष्णवीति ॥ ऐंद्र्याः शक्तेरितं पराङ्मुखं स्वसंमुखं प्राप्तमेनं वैष्णवी चक्रेणाभिजघान गदया च ताडयामासेत्यन्वयः ॥४६॥४७॥ शक्त्येति ॥४८॥ स चापीति ॥ अहनदिति छांदसम् । दितेरपत्यं दैत्यः महांतोऽसुराः यस्मादिति न पौनरुक्त्यम् ॥ ४९ ॥ ५० ॥ तैश्चेति ॥ उत्तमं निरतिशयं सकलं जगदित्यतिशयोक्तिः ॥५१॥ तानिति ॥ तान् विषण्णान् दृष्ट्वा सत्वरा त्वरया

ते चापि युयुधुस्तत्र पुरुषा रक्तसंभवाः ॥ समं मातृभिरत्युग्रशस्त्रपातातिभीषणम् ॥४४॥ पुनश्च वज्रपातेन क्षतमस्य शिरो यदा ॥ ववाह रक्तं पुरुषास्ततो जातास्सहस्रशः ॥ ४५ ॥ वैष्णवी समरे चैनं चक्रेणाभिजघान ह ॥ गदया ताडयामास ऐंद्री तमसुरेश्वरम् ॥ ४६ ॥ वैष्णवीचक्रभिन्नस्य रुधिरस्रावसंभवैः ॥ सहस्रशो जगद्व्याप्तं तत्प्रमाणैर्महासुरैः ॥ ४७ ॥ शक्त्या जघान कौमारी वाराही च तथासिना ॥ माहेश्वरी त्रिशूलेन रक्तबीजं महासुरम् ॥ ४८ ॥ स चापि गदया दैत्यः सर्वा एवाहनत्पृथक् ॥ मातृः कोपसमाविष्टो रक्तबीजो महासुरः ॥ ४९ ॥ तस्याहतस्य बहुधा शक्तिशूलादिभिर्भुवि ॥ पपात यो वै रक्तौघस्तेनासञ्छतशोऽसुराः ॥ ५० ॥ तैश्चासुरासृक्संभूतैरसुरैस्सकलं जगत् ॥ व्याप्तमासीत्ततो देवा भयमाजग्मुरुत्तमम् ॥५१॥ तान्विषण्णान्सुरान् दृष्ट्वा चंडिका प्राह सत्वरा ॥ उवाच कालीं चामुंडे विस्तीर्णं वदनं कुरु ॥ ५२ ॥ मच्छस्त्रपातसंभूतान्रक्तबिंदून्महासुरान् ॥ रक्तबिंदोः प्रतीच्छ त्वं वक्रेणानेन वेगिना ॥ ५३ ॥ भक्षयंती चर रणे तदुत्पन्नान्महासुरान् ॥ एवमेषः क्षयं दैत्यः क्षीणरक्तो गमिष्यति ॥ ५४ ॥

सहिता चंडिका सुरान्प्राह यूयं मा विषीदतेति शेषः॥५२॥ एवं सुरानाश्वास्य विस्तीर्णवदनेन रक्तबिंदोरिति जात्यपेक्षया ततो जातान्महासुरान् मच्छस्त्रपातसंभूतान् रक्तबिंदूंश्च भूमिमप्राप्तानेव प्रतीच्छ गृहाण ॥ ५३ ॥ किंच पानसमये त्वद्वक्त्रे समुत्पन्नान् महासुरान् भक्षयंती रणे चर । एवं प्रकारेणैव दैत्यः क्षयं गमिष्यति ॥५४ ॥

भक्ष्यमाणा इति ॥ उत्पत्स्यंतीति अनुदात्तेत्त्वलक्षणतङोऽनित्यत्वान्न तङ् ॥ ५५ ॥ मुखेनेति ॥ शोणितं भूगतमेव विस्तीर्णत्वाद्वदनस्य । असौ रक्तबीजः तत्र युद्धे ॥ ५६ ॥ न चेति ॥ चिदानंदात्मत्वादिति भावः ॥ ५७ ॥ यतस्तत इति ॥ सर्वत इत्यर्थः । अतिविस्तीर्णत्वात् एतस्य उत्तरार्धमुत्तरान्वयि ॥ ५८ ॥ तांश्चेति ॥ उत्तरार्धमुत्तरान्वयि । असिभिरिति क्रियापेक्षं बहुवचनम् । ऋष्टिभिरित्यप्येवम् । ऋष्टिरुभयतोधारोऽसिः ॥ ५९ ॥ जघानेति ॥ शस्त्रसंघैः समूहैः समाहत

भक्ष्यमाणास्त्वया चोग्रा न चोत्पत्स्यंति चापरे ॥ इत्युक्त्वा तां ततो देवी शूलेनाभिजघान तम् ॥ ५५ ॥ मुखेन काली जगृहे रक्तबीजस्य शोणितम् ॥ ततोऽसावाजघानाथ गदया तत्र चंडिकाम् ॥ ५६ ॥ न चास्या वेदनां चक्रे गदापातोऽल्पिकामपि ॥ तस्याहतस्य देहात्तु बहु सुस्राव शोणितम् ॥ ५७ ॥ यतस्ततस्तद्वक्त्रेण चामुंडा संप्रतीच्छति ॥ मुखे समुद्गता येऽस्या रक्तपातान्महासुराः ॥ ५८ ॥ तांश्चखादाथ चामुंडा पपौ तस्य च शोणितम् ॥ देवी शूलेन वज्रेण बाणैरसिभिरृष्टिभिः ॥ ५९ ॥ जघान रक्तबीजं तं चामुंडा पीतशोणितम् ॥ स पपात महीपृष्ठे शस्त्रसंघसमाहतः ॥ ६० ॥ नीरक्तश्च महीपाल रक्तबीजो महासुरः ॥ ततस्ते हर्षमतुलमवापुस्त्रिदशा नृप ॥ ६१ ॥ हते मातृगणस्तस्मिन्ननर्तासृङ्मदोद्धतः ॥ ६२ ॥ इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये रक्तबीजवधो नामाष्टमोऽध्यायः ॥ ८ ॥ राजोवाच ॥ विचित्रमिदमाख्यातं भगवन् भवता मम ॥ देव्याश्चरितमाहात्म्यं रक्तबीजवधाश्रितम् ॥ १ ॥ भूयश्चेच्छाम्यहं श्रोतुं रक्तबीजे निपातिते ॥ चकार शुंभो यत्कर्म निशुंभश्चातिकोपनः ॥ २ ॥

इति तृतीयातत्पुरुषः ॥ ६० ॥ नीरक्तश्चेति ॥ कातर्यात् निःशेषरुधिरत्वात् नीरक्तश्च सन् मातृगणो ब्रह्माण्यादिसमूहो ननर्तेत्यर्थः ॥ ६१ ॥ ६२ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्यानेऽष्टमोऽध्यायः ॥ ८ ॥ राजोवाच ॥ विचित्रमिति ॥ राजा सुरथः चरितं कर्म माहात्म्यं प्रभावः समाहारद्वंद्वः । आ-

श्रितं जनकम् ॥ १ ॥ २ ॥ ऋषिरुवाच ॥ चकारेति ॥ आहवे रणे ॥ ३ ॥ हन्यमानामिति ॥ उद्वहन् धारयन् ॥ ४ ॥ संदष्टौष्ठपुटाः दंताभ्यामंतःसंधृतौष्ठाः तथा सति पुटाकारता भवति ॥ ५ ॥ ६ ॥ तत इति ॥ देव्या इति सहार्थे तृतीया ॥ ७ ॥ चिच्छेदेति ॥ ताभ्यामस्तान् क्षिप्तानित्यन्वयः ॥ ८ ॥ ९ ॥ ताडित इति ॥



ऋषिरुवाच ॥ चकार कोपमतुलं रक्तबीजे निपातिते ॥ शुंभासुरो निशुंभश्च हतेष्वन्येषु चाहवे ॥ ३ ॥ हन्यमानं महासैन्यं विलोक्यामर्षमुद्वहन् ॥ अभ्यधावन्निशुंभोऽथ मुख्यया सुरसेनया ॥ ४ ॥ तस्याग्रतस्तथा पृष्ठे पार्श्वयोश्च महासुराः ॥ संदष्टौष्ठपुटाः क्रुद्धा हंतुं देवीमुपाययुः ॥ ५ ॥ आजगाम महावीर्यः शुंभोऽपि स्वबलैर्वृतः ॥ निहंतुं चंडिकां कोपात्कृत्वा युद्धं तु मातृभिः ॥६॥ ततो युद्धमतीवासीद्देव्याः शुंभनिशुंभयोः ॥ शरवर्षमतीवोग्रं मेघयोरिव वर्षतोः ॥ ७ ॥ चिच्छेदाऽस्ताञ्छरांस्ताभ्यां चंडिका स्वशरोत्करैः ॥ ताडयामास चांगेषु शस्त्रौघैरसुरेश्वरौ ॥ ८ ॥ निशुंभो निशितं खड्गं चर्म चादाय सुप्रभम् ॥ अताडयन्मूर्ध्नि सिंहं देव्या वाहनमुत्तमम् ॥ ९ ॥ ताडिते वाहने देवी क्षुरप्रेणासिमुत्तमम् ॥ निशुंभस्याशु चिच्छेद चर्म चाप्यष्टचंद्रकम् ॥ १० ॥ छिन्ने चर्मणि खड्गे च शक्तिं चिक्षेप सोऽसुरः॥ तामप्यस्य द्विधा चक्रे चक्रेणाभिमुखागताम् ॥११॥ कोपाध्मातो निशुंभोऽथ शूलं जग्राह दानवः॥ आयांतं मुष्टिपातेन देवी तच्चाप्यचूर्णयत् ॥१२॥ आविद्ध्याथ गदां साऽपि चिक्षेप चंडिकां प्रति ॥ सापि देव्यास्त्रिशूलेन भिन्ना भस्मत्वमागता॥१३॥

क्षुरप्रः शरविशेषः । चर्म फलकमष्टसंख्याकरत्नादिघटितं चंद्राकारसहितम् ॥ १० ॥ छिन्ने इति ॥ शक्तिक्षेपो देवीं प्रति अभिमुखागतां तां देवीं चिच्छेदेत्यर्थः॥ ११ ॥ कोपेति ॥ जग्राह ग्रहणपूर्वके प्रक्षेपेऽत्र ग्रहिः । आयांतं तच्छूलम् ॥ १२ ॥ आविध्य भ्रामयित्वा देव्या कर्त्र्या त्रिशूलेन करणेन सापि गदा भिन्ना भस्मत्वमागता

आपातिता च । अंतर्भाविण्यर्थात् क्तः ॥ १३ ॥ पुंगवं श्रेष्ठमत्र निशुंभस्य मूर्च्छासंपादनेन पातनम् ॥ १४ ॥ तस्मिन्निति ॥ प्रययौ शुंभ इति शेषः ॥ १५ ॥ स इति ॥ तथा स मुद्रिकाप्रकारेणात्युच्चैर्भुजैर्नभो व्याप्य बभावित्यर्थः ॥ १६ ॥ आयांतमागच्छंतम् ॥ १७॥ स्वनेन चेति चेन शंखज्याशब्दयोः समुच्चयः । वधो नाशविधायिनेति स्वनविशेषणम् ॥ १८ ॥ उपदिशः सामान्यदिशाक्षेपोपदिक्त्वं पूर्वादीनां दशानां तदाह दशेति ॥ १९ ॥ समुत्पत्य उत्प्लुत्य पुनरवतीर्य पृथ्वीम्

ततः परशुहस्तं तमायांतं दैत्यपुंगवम् ॥ आहत्य देवी बाणौघैरपातयत भूतले ॥ १४ ॥ तस्मिन्निपतिते भूमौ निशुंभे भीमविक्रमे ॥ भ्रातर्यतीव संक्रुद्धे प्रययौ हंतुमंबिकाम् ॥ १५ ॥ स रथस्थस्तथात्युच्चैर्गृहीतपरमायुधैः ॥ भुजैरष्टाभिरतुलैर्व्याप्याशेषं बभौ नभः ॥ १६ ॥ तमायांतं समालोक्य देवी शंखमवादयत् ॥ ज्याशब्दं चापि धनुषश्चकारातीव दुस्सहम्॥१७॥ पूरयामास ककुभो निजघंटास्वनेन च ॥ समस्तदैत्यसैन्यानां तेजोवधविधायिना ॥ १८ ॥ ततः सिंहो महानादैस्त्याजितेभमहामदैः ॥ पूरयामास गगनं गां तथौपदिशो दश ॥ १९ ॥ ततः काली समुत्पत्य गगनं क्ष्मामताडयत् ॥ कराभ्यां तन्निनादेन प्राक्स्वनास्ते तिरोहिताः ॥ २० ॥ अट्टहासमशिवं शिवदूती चकार ह ॥ तैः शब्दैरसुरास्त्रेसुः शुंभः कोपं परं ययौ ॥ २१ ॥ दुरात्मंस्तिष्ठ तिष्ठेति व्याजहारांबिका यदा ॥ तदा जयेत्यभिहितं देवैराकाशसंस्थितैः ॥ २२ ॥ शुंभेनागत्य या शक्तिर्मुक्ता ज्वालातिभीषणा ॥ आयांती वह्निकूटाभा सा निरस्ता महोल्कया ॥ २३ ॥ सिंहनादेन शुंभस्य व्याप्तं लोकत्रयान्तरम् ॥ निर्घातनिःस्वनो घोरो जितवानवनीपते ॥ २४ ॥

॥ २० ॥ अट्टहासं शकंध्वादित्वात्पररूपम् ॥ अशिवं रिपूणां भयदम् ॥ २१ ॥ आकाशे संस्थितैः देवैः दानवसंग्रामदर्शनाय तत्र स्थितैः ॥ २२ ॥ महोल्कयेति महाज्वालावत्या शक्त्येत्यर्थकम् । यद्वा तन्नामकशक्त्येत्यर्थकम् ॥ २३ ॥ सिंहेति ॥ उत्तरार्धस्य तथापीत्यादिनिर्घातनिःस्वनः उत्पातध्वनिः जितवानित्यस्य शुंभना-

दमिति शेषः ॥ २४ ॥ शुंभेति ॥ अनेन देवीशुंभयोः समयुद्धमुक्तम् ॥ २५ ॥ तत इति ॥ अभिहतः समंताद्धतोऽभिहतः ॥ २६ ॥ तत इति ॥ शुंभमूर्च्छानंतरं
निशुंभो यः पूर्वं मूर्च्छितः । आत्तं गृहीतम् ॥ २७ ॥ पुनरिति ॥ दनोः पुत्रोऽपि दितिजसमानशीलत्वाद्दितिजः ॥ २८ ॥ तत इति ॥ दुर्गे संकटे आर्त्तेः पीडायाः

शुंभमुक्ताञ्छरान्देवी शुंभस्तत्प्रहिताञ्छरान् ॥ चिच्छेद स्वशरैरुग्रैः शतशोऽथ सहस्रशः ॥ २५ ॥ ततः सा चण्डिका क्रुद्धा शूलेनाभि-
जघान तम् ॥ स तदाभिहतो भूमौ मूर्च्छितो निपपात ह ॥२६॥ ततो निशुंभः संप्राप्य चेतनामात्तकार्मुकः ॥ आजघान शरैर्देवीं कालीं
केसरिणं तथा ॥२७॥ पुनश्च कृत्वा बाहूनामयुतं दनुजेश्वरः॥ चक्रायुधेन दितिजश्छादयामास चंडिकाम्॥२८॥ततो भगवती क्रुद्धा दुर्गा
दुर्गार्तिनाशिनी ॥ चिच्छेद तानि चक्राणि स्वशरैः सायकांश्च तान् ॥२९॥ ततो निशुंभो वेगेन गदामादाय चंडिकाम् ॥ अभ्यधावत वै
हंतुं दैत्यसेनासमावृतः॥३०॥तस्यापतत एवाशु गदां चिच्छेद चंडिका॥ खड्गेन शितधारेण स च शूलं समाददे ॥३१॥ शूलहस्तं समा-
यांतं निशुंभममरार्दनम्॥ हृदि विव्याध शूलेन वेगाविद्धेन चंडिका ॥३२॥ भिन्नस्य तस्य शूलेन हृदयान्निःसृतोऽपरः ॥ महाबलो महा-
वीर्यस्तिष्ठेति पुरुषो वदन् ॥३३॥ तस्य निष्क्रामतो देवी प्रहस्य स्वनवत्ततः ॥ शिरश्चिच्छेद खड्गेन ततोऽसावपतद्भुवि ॥ ३४ ॥ ततः
सिंहश्चखादोग्रदंष्ट्राक्षुण्णशिरोधरान् ॥ असुरांस्तांस्तथा काली शिवदूती तथापरान् ॥३५॥ कौमारीशक्तिनिर्भिन्नाः केचिन्नेशुर्महासुराः ॥
ब्रह्माणीमंत्रपूतेन तोयेनान्ये निराकृताः ॥३६॥ माहेश्वरीत्रिशूलेन भिन्नाः पेतुस्तथापरे ॥ वाराहीतुंडघातेन केचिच्चूर्णीकृता भुवि ॥ ३७ ॥

नाशिनीति णिनिप्रत्ययः ॥ २९ ॥ तत इति ॥ दैत्यसेनया समावृतः ॥ ३० ॥ ३१ ॥ शूलेति ॥ समायांतं सम्मुखमायांतम् । वेगाविद्धेन वेगाक्षिप्तेन ॥ ३२ ॥ ३३ ॥
स्वनवदिति प्रहस्येत्यस्य विशेषणम् ॥ ३४ ॥ तत इति ॥ उग्रमिति क्रियाविशेषणम् । काली शिवदूती च चखादेत्यन्वयः ॥ ३५ ॥ निराकृताः ध्वस्ताः मंत्रोऽत्र

प्रणवः ॥ ३६ ॥ ३७ ॥ खंडखंडं खंडप्रकाराः खंडस्य खंडा वा यस्यां क्रियायां तथाकृताः । आद्ये " प्रकारे गुणवचनस्य " इति द्वित्वम् । वज्रेण च खंडखंडं कृत्वा इत्येव ॥ ३८ ॥ विनेशुर्मृताः नष्टाः पलायिताः ॥ ३९ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने नवमोऽध्यायः ॥ ९ ॥ ऋषिरुवाच ॥ निशुंभमिति ॥ १ ॥ बलेति ॥ बलगर्वेण दुर्विनीते दुर्गे मा गर्वमावह या त्वमतिमानिनी सती अन्यासां बलमाश्रित्य युध्यसे इत्यन्वयः ॥ २ ॥ देव्युवाच ॥ एकैवेति ॥

खंडखंडं च चक्रेण वैष्णव्या दानवाः कृताः ॥ वज्रेण चैंद्रीहस्ताग्रविमुक्तेन तथापरे ॥३८॥ केचिद्विनेशुरसुराः केचिन्नष्टा महाहवात् ॥ भक्षिताश्चापरे कालीशिवदूतीमृगाधिपैः ॥ ३९ ॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये निशुंभवधो नाम नवमोऽध्यायः ॥ ९ ॥ ऋषिरुवाच ॥ निशुंभं निहतं दृष्ट्वा भ्रातरं प्राणसंमितम् ॥ हन्यमानं बलं चैव शुंभः क्रुद्धोऽब्रवीद्वचः ॥ १ ॥ बलावलेपाद्दुष्टे त्वं मा दुर्गे गर्वमावह ॥ अन्यासां बलमाश्रित्य युध्यसे यातिमानिनी ॥ २ ॥ देव्युवाच ॥ एकैवाहं जगत्यत्र द्वितीया का ममापरा ॥ पश्यैता दुष्ट मय्येव विशंत्यो मद्विभूतयः ॥३॥ ततः समस्तास्ता देव्यो ब्रह्माणीप्रमुखा लयम् ॥ तस्या देव्यास्तनौ जग्मुरेकैवासीत्तदांबिका ॥ ४ ॥ देव्युवाच ॥ अहं विभूत्या बहुभिरिह रूपैर्यदा स्थिता ॥ तत्संहृतं मयैकैव तिष्ठाम्याजौ स्थिरो भव ॥ ५ ॥

एका स्वगतसजातीयभेदहीना परमात्मरूपत्वात् अपरान्या मम सहायभूता द्वितीया कास्ति न कापीत्यर्थः । अनुभूयमानस्तुतिभेदो न वास्तव इत्याह । पश्येति । वाक्यार्थस्य कर्मत्वं मद्विभूतय इत्यनेन भेदं निरस्यति ॥३॥ तत इति ॥ तनौ शरीरे लयम् अपृथग्भावम् । अनेन ब्रह्मादिभ्य आविर्भूतानामप्यत्र लयदर्शनेन समस्तोपादानत्वमस्या एवेति दर्शयति तच्च मूलशक्त्यभेदादित्युक्तम् ॥ ४ ॥ देव्युवाच ॥ अहमिति ॥ अहं विभूत्यैश्वर्येण बहुभिः रूपैः यत् बहुत्वं मया संहृतं तस्मादह-

मेकैव तिष्ठामि । त्वमपि रणे स्थिरो भवेत्यर्थः । अनेनापि तदेव दृढीकृतम् ॥ ५ ॥ ऋषिरुवाच ॥ तत इति ॥ पश्यतामित्यनादरे षष्ठी ॥ ६ ॥ भूयः महत् ॥ ७ ॥ ॥ ८ ॥ उग्रं च तत् हुंकारोच्चारणं च तदादिभूतं येषामस्त्राणाम् ॥ ९ ॥ ततस्तस्मात्कुपिता धनुः इषुभिः सह ॥ १० ॥ छिन्ने इति ॥ तथा तेन प्रकारेण छिन्ने ध-

ऋषिरुवाच ॥ ततः प्रववृते युद्धं देव्याः शुंभस्य चोभयोः ॥ पश्यतां सर्वदेवानामसुराणां च दारुणम् ॥६॥ शरवर्षैः शितैः शस्त्रैस्तथास्त्रैश्चैव दारुणैः॥ तयोर्युद्धमभूद्भूयः सर्वलोकभयंकरम् ॥७॥ दिव्यान्यस्त्राणि शतशो मुमुचे यान्यथांबिका ॥ बभंज तानि दैत्येंद्रस्तत्प्रतीघातकर्तृभिः॥८॥ मुक्तानि तेन चास्त्राणि दिव्यानि परमेश्वरी॥ बभंज लीलयैवोग्रहुंकारोच्चारणादिभिः॥९॥ ततश्शरशतैर्देवीमाच्छादयत सोऽसुरः॥ सापि तत्कुपिता देवी धनुश्चिच्छेद चेषुभिः॥१०॥छिन्ने धनुषि दैत्येंद्रस्तथा शक्तिमथाददे॥ चिच्छेद देवी चक्रेण तामप्यस्य करे स्थिताम्॥११॥ ततः खड्गमुपादाय शतचंद्रं च भानुमत्॥ अभ्यधावत्तदा देवीं दैत्यानामधिपेश्वरः ॥१२॥ तस्यापतत एवाशु खड्गं चिच्छेद चंडिका॥ धनुर्मुक्तैः शितैर्बाणैश्चर्म चार्ककरामलम् ॥१३॥ हताश्वः स तदा दैत्यश्छिन्नधन्वा विसारथिः॥ जग्राह मुद्गरं घोरमंबिकानिधनोद्यतः॥१४॥ चिच्छेदापततस्तस्य मुद्गरं निशितैः शरैः॥ तथापि सोऽभ्यधावत्तां मुष्टिमुद्यम्य वेगवान् ॥१५॥ स मुष्टिं पातयामास हृदये दैत्यपुंगवः ॥ देव्यास्तं चापि सा देवी तलेनोरस्यताडयत् ॥१६॥ तलप्रहाराभिहतो निपपात महीतले॥ स दैत्यराजः सहसा पुनरेव तथोत्थितः ॥१७॥ उत्पत्य च प्रगृह्योच्चैर्देवीं गगनमास्थितः॥ तत्रापि सा निराधारा युयुधे तेन चंडिका ॥ १८ ॥

नुषीत्यन्वयः ॥ ११ ॥ तत इति ॥ १२ ॥ चर्म चेति चेनाश्वसारथ्योः समुच्चयः ॥ १३ ॥ तदाह–हताश्व इति ॥ १४ ॥ १५ ॥ स मुष्टिमिति ॥ देव्याः हृदये इत्यन्वयः । तलं प्रसृतचपेटः ॥ १६ ॥ १७ ॥ उच्चैर्गगनमित्यन्वयः । आस्थित आश्रितवान् । निराधारा स्वप्रयत्नेतरयानाभावहेतुहीना । तेन शुंभेन ॥ १८ ॥

नियुद्धं बाहुयुद्धं तद्विशेषणं प्रथममिति मुख्यार्थकम् । सिद्धाः देवयोनिविशेषाः मुनय ऋषयः॥१९॥उत्पात्य कंदुकवदुपरि क्षिप्त्वा पतनसमये चरणमुद्धृत्य भ्रामयामास धरणीतले चिक्षेप चेत्यर्थः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ उत्पातेति ॥ उत्पातसूचका मेघाः शुंभादेवाशुभं च उल्का दिव्यतेजः प्राक् शुंभवधात् । तथा तद्वत्सरितो

नियुद्धं खे तदा दैत्यश्चंडिका च परस्परम् ॥ चक्रतुः प्रथमं सिद्धमुनिविस्मयकारकम् ॥ १९ ॥ ततो नियुद्धं सुचिरं कृत्वा तेनांबिका सह ॥ उत्पात्य भ्रामयामास चिक्षेप धरणीतले ॥ २० ॥ स क्षिप्तो धरणीं प्राप्य मुष्टिमुद्यम्य वेगितः॥ अभ्यधावत दुष्टात्मा चंडिकानिधनेच्छया ॥ २१ ॥ तमायांतं ततो देवी सर्वदैत्यजनेश्वरम् ॥ जगत्यां पातयामास भित्त्वा शूलेन वक्षसि ॥ २२ ॥ स गतासुः पपातोर्व्यां देवीशूलाग्रविक्षतः ॥ चालयन्सकलां पृथ्वीं साब्धिद्वीपां सपर्वताम् ॥ २३ ॥ उत्पातमेघास्सोल्का ये प्रागासंस्ते शमं ययुः ॥ सरितो मार्गवाहिन्यस्तथासंस्तत्र पातिते ॥ २४ ॥ ततः प्रसन्नमखिलं हते तस्मिन् दुरात्मनि ॥ जगत्स्वास्थ्यमतीवाप निर्मलं चाभवन्नभः ॥ २५ ॥ ततो देवगणास्सर्वे हर्षनिर्भरमानसाः ॥ बभूवुर्निहते तस्मिन् गंधर्वा ललितं जगुः ॥ २६ ॥ अवादयंस्तथैवान्ये ननृतुश्चाप्सरोगणाः ॥ ववुः पुण्यास्तथा वातास्सुप्रभोऽभूद्दिवाकरः ॥ २७ ॥ जज्वलुश्चाग्नयश्शांताः शांता दिग्जनितस्वनाः ॥ २८ ॥ इति मार्कण्डेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये शुंभवधो नाम दशमोऽध्यायः ॥ १० ॥

मार्गवाहिन्यः न पूर्ववदुत्पथगामिन्य आसन् तत्र शुंभे ॥ २४ ॥ २५ ॥ २६ ॥ पुण्याः अनुकूलाः ॥ २७ ॥ जज्वलुरिति ॥ अग्नयः आहवनीयादयः शांताः सौम्याः संतो जज्वलुः शांताः दिक्षु जनिताः स्वनाः उत्पातसूचकस्फुटनादिशब्दा येषां ते ॥ २८ ॥ इति शिवभट्टसु० नागोजीभट्टकृते स० दशमोऽध्यायः ॥ १० ॥

ऋषिरुवाच ॥ देव्येति ॥ तत्र युद्धे वह्निपुरोगमाः वह्निमुख्याः कात्यायनीमित्यनेन परस्परमासामैक्यं सूचयति । इष्टस्य शुंभादिवधस्य लंभात्प्राप्तेः नुमागमः। विकासीनि विकस्वराणि वक्त्राणि येषां ते तु पादपूरणे विकासिताः आशाः यैः ॥ १ ॥ देवीति ॥ प्रपन्नाः भक्ताः आदरे प्रसीदेति त्रिरुक्तिः । चराचरस्य मध्ये त्वमीश्वरी स्वतंत्रा इतरत्सर्वं त्वत्परतंत्रमिति भावः ॥ २ ॥ आधारभूतेति ॥ तत्र हेतुः महीस्वरूपेणेति । स्थितिः अपां स्वरूपस्थितया अबभिन्नस्वरूपेणेति स्थितया गमकत्वात्समासः । आप्यायते प्यायीत्यतः कर्मणि यक् अनेनोक्तलक्षणेन सार्वात्म्यं विवक्षितम् ॥ ३ ॥ त्वमिति ॥ आद्यपादे पालनशक्तिमत्त्वं द्वितीये कारणशक्तिमत्त्वं मायाऽविद्या

ऋषिरुवाच ॥ देव्या हते तत्र महासुरेंद्रे सेंद्राः सुरा वह्निपुरोगमास्ताम् ॥ कात्यायनीं तुष्टुवुरिष्टलम्भाद्विकासिवक्त्राब्जविकासिताशाः ॥ १ ॥ देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य ॥ प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य ॥ २ ॥ आधारभूता जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि ॥ अपां स्वरूपस्थितया त्वयैतदाप्यायते कृत्स्नमलंघ्यवीर्ये ॥ ३ ॥ त्वं वैष्णवी शक्तिरनंतवीर्या विश्वस्य बीजं परमासि माया ॥ संमोहितं देवि समस्तमेतत्त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ॥ ४ ॥ विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु ॥ त्वयैकया पूरितमंबयैतत्का ते स्तुतिः स्तव्यपरा परोक्तिः ॥ ५ ॥ सर्वभूता यदा देवी स्वर्गमुक्तिप्रदायिनी ॥ त्वं स्तुता स्तुतये का वा भवंति परमोक्तयः ॥ ६ ॥

त्वयैतत्संमोहितं संसारगर्ते पातितं तत्किं मोक्षो नास्त्येवेत्यत आह । त्वं प्रसन्ना कृतप्रसादा वै प्रसिद्धम् । भुवि जगति मुक्तिहेतुः ॥ ४ ॥ विद्या इति ॥ " अंगानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ " आयुर्वेदधनुर्वेदगंधर्वार्थशास्त्रैः सहाष्टादश भेदाः अंशाः सकलाश्चतुःषष्टिकलोपेताः पातिव्रत्यसौंदर्यतारुण्याद्युपेताः समस्ताः स्त्रियोऽपि तवांशाः त्वयैतत्पूरितम् अंतर्बहिश्च व्याप्तम् । एवं च त्वत्तः पृथग्भूतस्याभावात् अतस्ते स्तुत्ये विषये परापरा गौणी मुख्या च या उक्तिस्तद्रूपा स्तुतिः का ते इत्यर्थः । यद्वा उक्तिरूपा त्वमेवातः का ते स्तुतिः ॥ ५ ॥ पुनरपि स्तुतेरघटनामाह–सर्वेति ॥ सर्वभूता

विश्वात्मिका देवी द्योतनशीला स्वर्गमुक्त्योः प्रकर्षेण दात्रीति यदा त्वं स्तुता तदा वा स्तुतये परमा अधिका उक्तयः का भवंतु न का अपीत्यर्थः ॥ ६ ॥ तथाप्यभ्युपगम्याप्याह–सर्वस्येति ॥ बुद्धिर्निश्चयात्मकज्ञानं तद्द्वारैव स्वर्गापवर्गदा त्वं नारायणस्य विष्णोः शक्तिर्नारायणी तत्संबोधने शुद्धसत्त्वप्रधाना वैष्णवी त्वमिति ध्वन्यते । ते तुभ्यं यद्वा नारस्य जीवसमूहस्यायनी स्थानभूता तद्रूपा तत्साधनम् ॥ ७ ॥ कलेति ॥ कलेति त्रिंशत्काष्ठाः अष्टादश निमेषाः काष्ठा आदिना क्षणमुहूर्तादयः परिणामो जनानामवस्थाविशेषः तेनाखंडकालरूपत्वम् । तदेव पुनराह । विश्वस्योपरतौ नाशे शक्तिर्नाशक्तिमती इत्यर्थः । कालस्यैव जगद्भक्षकत्वात् ॥ ८ ॥

सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते ॥ स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते ॥७॥ कलाकाष्ठादिरूपेण परिणामप्रदायिनी ॥ विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते ॥८॥ सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ॥ ९ ॥ सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि ॥ गुणाश्रये गुणमये नारायणि नमोऽस्तु ते ॥ १० ॥ शरणागतदीनार्तपरित्राणपरायणे ॥ सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ ११ ॥ हंसयुक्तविमानस्थे ब्रह्माणीरूपधारिणि ॥ कौशांभक्षुरिके देवि नारायणि नमोऽस्तु ते ॥ १२ ॥ त्रिशूलचंद्राहिधरे महावृषभवाहिनि ॥ माहेश्वरीस्वरूपेण नारायणि नमोऽस्तु ते ॥ १३ ॥

सर्वेति ॥ सर्वमंगलानां मंगलत्वरूपे शिवे कल्याणकर्त्रि शरण्ये शरणार्हे त्र्यंबके त्रिनेत्रे गौरि गौरवर्णे अनेन शैवीत्वमप्यस्याः ध्वनितम् ॥ ९ ॥ सृष्टीति ॥ आद्याधेन ब्रह्मादीनां सृष्ट्यादिशक्तिः त्वमेवेत्युक्तम् । सनातनि नित्ये, गुणानां महदादीनामाश्रयभूते अगुणमये अविद्यमानगुणकृतविकारे ॥ १० ॥ शरणेति ॥ दीनाः सर्गादिकं दुःखं भाजः आर्ताः तस्करादिपीडिताः परायणा तत्परा तद्रुपपादकमार्तिहरे, इति यतः आर्तेः पीडायाः हंत्रीत्यर्थः ॥ ११ ॥ हंसेति ॥ हंसयुक्तविमानस्थिते ब्रह्माणीरूपधारिके, कुशं जलं तस्यायं कौशः कमंडलुः तदंभसः क्षुरिके सेचिके ॥ १२ ॥ त्रिशूलेति ॥ माहेश्वरीस्वरूपेणेति पूर्वार्धतान्वायि ॥ १३ ॥

मयूरेति ॥ मयूरकुक्कुटं तत्पिच्छं तेन वृते कुक्कुटः कुकुभेऽपि । "ध्वजेन शिखिवर्हाणामुच्छ्रितेन समावृता ।" इति हरिवंशोक्तेः । अनघे अघरहिते, कुमारशक्तेरिव रूपं संस्थानमवयवसन्निवेशश्च यस्याः ॥१४॥ शंखेति ॥ शंखादीनि गृहीतानि परमायुधानि यया ॥१५॥१६॥ नृसिंहेति ॥ त्रैलोक्यत्राणाय सम्यक्र हिते लोपः ॥१७॥ महावज्रे, महत् वज्रं यस्याः ॥ १८ ॥ शिवेति ॥ हतं दैत्यानां महाबलं यया सा ॥ १९ ॥ २० ॥ हे लक्ष्मि, महाविद्या उपनिषत् । श्रद्धा आस्तिक्यबुद्धिः । पुष्टिस-

मयूरकुक्कुटवृते महाशक्तिधरेऽनघे ॥ कौमारीरूपसंस्थाने नारायणि नमोऽस्तु ते ॥ १४ ॥ शंखचक्रगदाशार्ङ्गगृहीतपरमायुधे ॥ प्रसीद वैष्णवीरूपे नारायणि नमोऽस्तु ते॥१५॥ गृहीतोग्रमहाचक्रे दंष्ट्रोद्धृतवसुंधरे ॥ वराहरूपिणि शिवे नारायणि नमोऽस्तु ते॥१६॥ नृसिंहरूपेणोग्रेण हंतुं दैत्यान्कृतोद्यमे ॥ त्रैलोक्यत्राणसहिते नारायणि नमोऽस्तु ते ॥ १७॥ किरीटिनि महावज्रे सहस्रनयनोज्ज्वले ॥ वृत्रप्राणहरे चैंद्रि नारायणि नमोऽस्तु ते ॥ १८ ॥ शिवदूतीस्वरूपेण हतदैत्यमहाबले ॥ घोररूपे महारावे नारायणि नमोऽस्तु ते ॥१९॥ दंष्ट्राकरालवदने शिरोमालाविभूषणे ॥ चामुंडे मुंडमथने नारायणि नमोऽस्तु ते ॥ २० ॥ लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टि स्वधे ध्रुवे ॥ महारात्रि महाविद्ये नारायणि नमोऽस्तु ते ॥ २१ ॥ मेधे सरस्वति वरे भूति बाभ्रवि तामसि ॥ नियते त्वं प्रसीदेशे नारायणि नमोऽस्तु ते ॥ २२ ॥ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ॥ भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥ २३ ॥



हितस्वधे महती अविद्या सर्वावरणसमर्थो महामोहः तद्रूपे ॥ २१ ॥ मेधे इति ॥ मेधा धारणावती बुद्धिः सरस्वती वाग्देवता वरे श्रेष्ठे भूतिसत्त्वप्रधाने । छांदसो गुणाभावः । अनेन सात्त्विकी त्वम् । बभ्रू रजोगुणस्तद्युक्ते, तामसि तमोगुणयुक्ते, इदं मूलशक्त्यभिप्रायेण । नियतिरदृष्टं तद्रूपे ईशे समर्थे ॥ २२ ॥ सर्वेति ॥ देवीत्यस्य

द्विरुक्तिः प्रसादने । त्राहीत्यार्षम् ॥२३॥ सर्वभूतेभ्यः सर्वभूतविकारेभ्यः प्राणिभ्यश्च कात्यायनी तदाश्रमभवे ॥२४॥ ज्वालेति ॥ नोऽस्मान् भीतेर्भयात् ॥२५॥ हिनस्तीति ॥ अतः प्राणिमाता वा सुतानिव नोऽस्मान् पापेभ्यः पात्वित्यर्थः । अनितेः पचाद्यच् ॥२६॥ असुरेति ॥ चर्चितो लिप्तः करं हस्तमुज्ज्वलयति करैः किरणैरुज्ज्वलो वा ॥२७॥ रोगानिति ॥ अभीष्टान् अपहंसीत्याकृष्यत इति यत् इष्टवियोगलक्षणा विपत्तिः यतस्त्वामाश्रिता अन्येषामाश्रयतां प्रयांति ॥२८॥ एतदिति ॥ कदनं नाशः

एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ॥ पातु नः सर्वभीतिभ्यः कात्यायनि नमोऽस्तु ते ॥ २४ ॥ ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ॥ त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥ २५ ॥ हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ॥ सा घंटा पातु नो देवि पापेभ्यो नः सुतानिव ॥२६॥ असुरासृग्वसापंकचर्चितस्ते करोज्ज्वलः ॥ शुभाय खड्गो भवतु चंडिके त्वां नता वयम् ॥२७॥ रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान्सकलानभीष्टान् ॥ त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयांति ॥ २८ ॥ एतत्कृतं यत्कदनं त्वयाद्य धर्मद्विषां देवि महासुराणाम् ॥ रूपैरनेकैर्बहुधात्ममूर्तिं कृत्वाऽम्बिके तत्प्रकरोति कान्या ॥२९॥ विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु वाक्येषु च का त्वदन्या ॥ ममत्वगर्तेऽतिमहांधकारे विभ्रामयत्येतदतीव विश्वम् ॥ ३० ॥ रक्षांसि यत्रोग्रविषाश्च नागा यत्रारयो दस्युबलानि यत्र ॥ दावानलो यत्र तथाब्धिमध्ये तत्र स्थिता त्वं परिपासि विश्वम् ॥ ३१ ॥

धर्मद्विषोऽसुराः अद्य अधुना आत्ममूर्तिमेव अनेकैः रूपैः ब्रह्माण्यादिकाल्यादिलक्षणैः । अभेदे तृतीया । बहुधा बहुप्रकारा अन्या त्वदितरा का न कापीत्यर्थः ॥ २९ ॥ विद्यास्विति ॥ विद्यासु ज्ञानेषु उपायभूतानि यानि शास्त्रादीनि तेषु मन्वाद्युक्तेषु विवेकदीपेषु उपनिषत्सु आद्येषु वाक्येषु कर्मकांडपरवेदवाक्येषु च सत्स्वेवं ममत्वगर्ततदाश्रये महांधकारे संसारे एतद्विश्वं त्वदन्या का अतीव विभ्रामयति न कापीत्यर्थः ॥ ३० ॥ रक्षांसीति ॥ नागाः सर्पाः अत्र यत्रेत्यनुकृष्यते । दस्यवः चौराः

दावो वनम् । तथाविधमध्ये यत्रैर्वाग्न्यादयः तत्र त्वमेव व्यापकत्वात् स्थिता विश्वं परिपासीत्यन्वयः ॥ ३१ ॥ यतस्त्वं विश्वेश्वरी अतो विश्वं परिपासि यतः त्वं विश्वात्मिका अतस्त्वं तद्धारयसि यतो भवती विश्वेशानामिंद्रब्रह्मादीनामपि स्तुत्या अतस्त्वयि भक्तिनम्राः ये ते विश्वाश्रयाः भवंति ॥ ३२ ॥ देवीति ॥ हे देवि, नोऽस्मान् सद्यः क्षणमात्रेण शत्रुभीतेः पालय यथाधुनैव संप्रत्येवासुरवधात् पालितवत्यसि तथेत्यर्थः । सर्वजगतां पापानि आशु शीघ्रं प्रशमं नय । उत्पातानां पाकः फलदानकालस्तेन जनितान् महोपसर्गान् मायादींश्च प्रशमं नयेति ॥ ३३ ॥ प्रणतानामिति ॥ ईड्ये स्तव्ये ॥ ३४ ॥ देव्युवाच ॥ वरदेति ॥ यं वरं यमभीप्सितार्थं

विश्वेश्वरि त्वं परिपासि विश्वं विश्वात्मिका धारयसीति विश्वम् ॥ विश्वेशवंद्या भवती भवंति विश्वाश्रया ये त्वयि भक्तिनम्राः॥३२॥ देवि प्रसीद परिपालय नोऽरिभीतेर्नित्यं यथासुरवधादधुनैव सद्यः ॥ पापानि सर्वजगतां प्रशमं नयाशु उत्पातपाकजनितांश्च महोपसर्गान् ॥ ३३ ॥ प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि ॥ त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥ ३४ ॥ देव्युवाच ॥ वरदाहं सुरगणा वरं यं मनसेच्छथ ॥ तं वृणुध्वं प्रयच्छामि जगतामुपकारकम् ॥ ३५ ॥ देवा ऊचुः ॥ सर्व[1]बाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ॥ एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥ ३६ ॥ देव्युवाच ॥ वैवस्वतेंऽतरे प्राप्ते अष्टाविंशतिमे युगे ॥ शुंभो निशुंभश्चैवान्यावुत्पत्स्येते महासुरौ ॥ ३७॥ नंदगोपगृहे जाता यशोदागर्भसंभवा ॥ ततस्तौ नाशयिष्यामि विंध्याचलनिवासिनी ॥ ३८ ॥

वृणुध्वं प्रार्थयध्वम् ॥ ३५ ॥ देवा ऊचुः ॥ सर्वबाधेति ॥ सर्वा चासौ बाधा चेत्यर्थः । इदं वैरिविनाशनस्य विशेषणम् । एवमेव शुंभादिनाशनवदेव ॥ ३६ ॥ देव्युवाच ॥ वैवस्वते इति ॥ अंतरे मन्वन्तरे अष्टाविंशतिमे अष्टाविंशतिसंख्याके डटो मडागमश्छांदसः । युगे चतुर्युगे तत्र कलिद्वापरसंधावनयोरुत्पत्तिः ॥ ३७॥ नंदेति ॥

१ सर्वाबाधाप्रशमनमित्यपि पाठः बहुषु पुस्तके तथैव दृष्टत्वात् ।

नंदगोपस्य एषा महालक्ष्म्यंशभूता " नंदा भगवती नाम या भविष्यति नंदजा । कनकोत्तमकांतिः सा सुकांतिकनकांबरा ॥ कमलांकुशपाशाब्जैरलंकृतचतुर्भुजा । इंदिरा कमला लक्ष्मीः सा श्री रुक्मांबुजासना ॥ " इति रहस्योक्तेः ॥ ३८ ॥ पुनरपीति ॥ इयमपि द्वापरेऽतीते तत्रैव चतुर्युगेऽवतीर्णेत्याहुः । वैप्रचित्तान् विप्रचित्तवंशीयान् ॥ ३९ ॥ ४० ॥ तत इति ॥ एषा रक्तदंतिका काल्यंशभूता । अत्र दंतेत्युपलक्षणम् । केशायुधसर्वावयवेषु रक्तत्वमस्या अत एवास्या रक्तचामुंडात्वेन व्यवहारः । अत्र सर्वत्राहमिति निर्देशः परस्परमपि शाक्तानामभेदाभिप्रायेण ॥ ४१ ॥ भूयश्चेति ॥ अनंभसि कृष्यादिजलशून्यायामपीत्यर्थः । अयोनिजा यथेदानीं

पुनरप्यतिरौद्रेण रूपेण पृथिवीतले ॥ अवतीर्य हनिष्यामि वैप्रचित्तांश्च दानवान् ॥३९॥ भक्षयंत्याश्च तानुग्रान्वैप्रचित्तान्महासुरान् ॥ रक्ता दंता भविष्यंति दाडिमीकुसुमोपमाः ॥४०॥ ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः ॥ स्तुवंतो व्याहरिष्यंति सततं रक्तदंतिकाम् ॥४१॥ भूयश्च शतवार्षिक्यामनावृष्ट्यामनंभसि ॥ मुनिभिः संस्मृता भूमौ संभविष्याम्ययोनिजा॥४२॥ ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन् ॥ कीर्तयिष्यंति मनुजाः शताक्षीमिति मां ततः ॥४३॥ ततोऽहमखिलं लोकमात्मदेहसमुद्भवैः ॥ भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः॥४४॥शाकंभरीति विख्यातिं तदा यास्याम्यहं भुवि॥ तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम्॥४५॥

पार्वतीदेहाविर्भाव एवमपि चेत्यर्थः ॥ ४२ ॥ तत इति ॥ यत् यस्मात् मुनीन् निरीक्षिष्यामि तत्तस्मात् ॥ ४३ ॥ वैवस्वतमन्वंतर एव चत्वारिंशत्तमे युगे शताक्षीशाकंभर्यवतारः । " तस्मिन्नेवांतरे शक्र चत्वारिंशत्तमे युगे । " इति लक्ष्मीतंत्रोक्तेः । तत्रैव दुर्गमासुरवधः । " शाकंभरीं स्तुवन् ध्यायञ्छक्र संपूजयन्नमन् । अक्षय्यमश्नुते भूतिमन्नं पानं भवांतरे ॥ " इति च तत्रैव ॥ ४४ ॥ शाकंभरीति ॥ एषा पार्वत्यंशा एव शाकंभरी नीलवर्णेत्याद्युक्तेः । दुर्गमनामाऽसुरः तत्रैव शाकंभर्यवतार एव । " शाकंभरी शताक्षी सा सैव दुर्गा प्रकीर्त्तिता । उमा गौरी सती चंडी कालिकेशा च पार्वती ॥ " इति । " पत्रमूलकरीराग्रमूलकांडाधिरूढकाः । त्वक् पुष्पं

कवचं चेति शाकं दशविधं स्मृतम् ॥ " ॥ ४५ ॥ दुर्गेति ॥ भीमं भयंकरम् ॥ ४६ ॥ भक्षयिष्यामीत्यंतस्य पदद्वयविशिष्टम् ॥४७॥ भीमेति ॥ " भीमापि नीलवर्णैव दंष्ट्रादशनभासुरा । चंद्रहासं चंडमेरुं शिरः पात्रं च बिभ्रती ॥ एकवीरा कालरात्रिर्निद्रा तृष्णा दुरत्यया।" इत्युक्तेरियं काल्यंशा एव। पंचाशत्तमे चतुर्युगे वैवस्वतमन्वंतरे एव भीमावतार इति लक्ष्मीतंत्रे । अरुणाख्योऽरुणो नाम ॥४८॥ तदेति ॥ भ्रामरं पाणिधृतभ्रमरमसंख्येयाः षट्पदाः यस्मिन् रूपे तत् ॥ ४९ ॥ भ्रामरीति ॥

दुर्गा देवीति विख्यातं तन्मे नाम भविष्यति ॥ पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले॥४६॥ रक्षांसि [1]भक्षयिष्यामि मुनीनां त्राणकारणात् ॥ तदा मां मुनयः सर्वे स्तोष्यत्यानम्रमूर्तयः ॥ ४७ ॥ भीमादेवीति विख्यातं तन्मे नाम भविष्यति ॥ यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति ॥४८॥ तदाहं भ्रामरं रूपं कृत्वा संख्येयषट्पदम् ॥ त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम् ॥४९॥ भ्रामरीति च मां लोकास्तदा स्तोष्यंति सर्वतः ॥ इत्थं यदा यदा बाधा दानवोत्था भविष्यति ॥ ५० ॥ तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ॥ ५१ ॥ इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये देवैः कृता नारायणीस्तुतिर्नामैकादशोऽध्यायः ॥ ११ ॥

देव्युवाच ॥ एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः ॥ तस्याहं सकलां बाधां नाशयिष्याम्यसंशयम् ॥ १ ॥

" तेजोमंडलदुर्धर्षा भ्रामरी चित्रकांतिभृत् । चित्रभ्रमणपाणिः सा महामारीति गीयते ॥ महामाया महाकाली महामारी क्षुधा तृषा । " इत्युक्तेरियमपि काल्यंशा एव । सर्वतः सर्वत्र वैवस्वतेंऽतर एव षष्टितमे चतुर्युगे भ्रामर्यवतार इति लक्ष्मीतंत्रे इत्थमित्याद्युत्तरान्वयि ॥ ५० ॥ तदेति ॥ स्पष्टम् ॥ ५१ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने एकादशोऽध्यायः ॥ ११ ॥ दे०युवाच ॥ एभिरिति ॥ मधुकैटभवधादिलक्षणैरित्यर्थः । सकलामैहिकीं पारलौकिकीं समाहि-

१ क्षययिष्यामीत्यपि काशीमुद्रितपुस्तके पाठः तत्र टीकायां क्षययिष्यामि नाशयिष्यामीति च ।

तोऽनन्यमनाः॥१॥ तदेवाह–मध्विति ॥२॥ श्रोष्यंति चात्पाठिष्यंति अष्टम्यामित्यादिमुख्यकालकथनम् ॥३॥ न तेषामिति ॥ दुष्कृतं पापं दरिद्रशब्दात् ष्यञि दारिद्र्यम् ॥ ४ ॥ शत्रुत इति ॥ न शस्त्रेति संग्रामभीरुविषयम् ॥५॥ सदा नित्यम् । हि यतः तत् माहात्म्यं स्वस्ति कल्याणं तस्यायनं मार्गः ॥६॥ उपसर्गानिति ॥ माहात्म्यं कर्तृ महामारी जनक्षयकरी देवता तस्याः समुद्भवो येषां तानुपसर्गानुपद्रवान् तथा त्रिविधं व्याधिरागद्वेषादिरूपम् आध्यात्मिकं भूतप्रेतादिजभयभ्रमाद्यधिभौतिकम्

मधुकैटभनाशं च महिषासुरघातनम् ॥ कीर्तयिष्यंति ये तद्वद्वधं शुंभनिशुंभयोः ॥२॥ अष्टम्यां च चतुर्दश्यां नवम्यां चैकचेतसः ॥ श्रोष्यंति चैव ये भक्त्या मम माहात्म्यमुत्तमम् ॥ ३ ॥ न तेषां दुष्कृतं किंचिद्दुष्कृतोत्था न चापदः ॥ भविष्यति न दारिद्र्यं न चैवेष्टवियोजनम् ॥ ४ ॥ शत्रुतो न भयं तस्य दस्युतो वा न राजतः ॥ न शस्त्रानलतोयौघात्कदाचित्संभविष्यति ॥ ५ ॥ तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः ॥ श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं हि तत् ॥ ६ ॥ उपसर्गानशेषांस्तु महामारीसमुद्भवान् ॥ तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम ॥ ७ ॥ यत्रैतत्पठ्यते सम्यङ् नित्यमायतने मम ॥ सदा न तद्विमोक्ष्यामि सांनिध्यं तत्र मे स्थितम् ॥ ८॥ बलिप्रदाने पूजायामग्निकार्ये महोत्सवे ॥ सर्वं ममैतच्चरितमुच्चार्यं श्राव्यमेव च ॥ ९ ॥ जानताजानता वापि बलिपूजां तथाकृताम् ॥ प्रतीक्षिष्याम्यहं प्रीत्या वह्निहोमं यथाकृतम् ॥ १० ॥

दैवकृतवज्रपातदारिद्र्याद्याधिदैविकं तद्रूपमुत्पातम् अनिष्टं दिव्यं भौममांतरिक्षं चेति त्रिविधमुत्पातं च ॥ ७ ॥ यत्रेति ॥ यत्रायतने गृहे मम मत्संबंध्येतत्सम्यगर्थावधारणपूर्वकमस्खलितवर्णादि च ॥८॥ बलीति ॥ बलिप्रदानं देवतोद्देशेन पश्वाद्युपहारः पूजा गंधादिनार्चनम् अग्निकार्यं देवीदैवत्यो होमः महोत्सवः पुत्रजन्मविवाहादि उच्चार्यं इति द्विजविषयम् ॥ ९ ॥ तत्फलमाह–जानतेति ॥ जानता विधिज्ञेन अजानता तदन्येन बलिमहितां पूजां तथा वेद्यावेद्यप्रकारेण मन्माहात्म्योदीरणादौ सति

यथाकथंचिदपि कृतमेतत् प्रतीक्षिष्यामि अंगीकरिष्यामीत्यर्थः ॥१०॥ शरदिति ॥ शरत्काले आश्विनशुक्लप्रतिपदमारभ्य क्रियमाणा दुर्गोत्सवरूपा या च वार्षिकी वर्ष-शब्दो वर्षादौ लाक्षणिकः तेन चैत्रशुक्लप्रतिपदमारभ्य क्रियमाणा इत्यर्थः ॥११॥१२॥ उत्पत्तयः प्रादुर्भावान् द्वितीयार्थे प्रथमा । पराक्रमं चेति पूर्वान्वयि । युद्धेष्वित्यु-पलक्षणम् ॥१३॥ उपपद्यते प्राप्यते कुलं च नंदते वर्धते ॥१४॥ शांतिकर्म उपसर्गादिनिवर्तकं कर्म तस्मिन् तत्स्थान इत्यर्थः । अन्ये सप्तम्यौ विषयार्थे ॥१५॥ तदेव

शरत्काले महापूजा क्रियते या च वार्षिकी ॥ तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः ॥ ११ ॥ सर्वबांधाविनिर्मुक्तो धनधा-न्यसुतान्वितः ॥ मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥ १२ ॥ श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः ॥ पराक्रमं च युद्धेषु जायते निर्भयः पुमान् ॥ १३ ॥ रिपवः संक्षयं यांति कल्याणं चोपपद्यते ॥ नंदते च कुलं पुंसां माहात्म्यं मम शृण्वताम् ॥ १४ ॥ शांतिकर्मणि सर्वत्र तथा दुःस्वप्नदर्शने ॥ ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्मम ॥ १५ ॥ उपसर्गाः शमं यांति ग्रहपीडाश्च दारुणाः ॥ दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते ॥ १६ ॥ बालग्रहाभिभूतानां बालानां शांतिकारकम् ॥ संघातभेदे च नृणां मैत्रीकरणमुत्तमम् ॥ १७ ॥ दुर्वृत्तानामशेषाणां बलहानिकरं परम् ॥ रक्षोभूतपिशाचानां पठनादेव नाशनम् ॥ १८ ॥ सर्वं ममैतन्माहात्म्यं मम सन्निधिकारकम् ॥ पशुपुष्पार्घधूपैश्च गंधदीपैस्तथोत्तमैः ॥ १९ ॥

विवृणोति–उपसर्गा इति ॥ दुःस्वप्नशब्दस्तु फले इति नपुंसकत्वम् ॥१६॥ बालग्रहाः पूतनाद्याः संघातभेदे मैत्रीविघट्टने ॥ १७ ॥ दुर्वृत्तानां दुष्टानां व्याघ्रसूचकानाम् ॥१८॥ पश्चित्यादिश्लोकद्वयमेकान्वयम् । पशुर्बलिः । अर्घोऽष्टांगः । " आपः क्षीरं कुशाग्राणि दध्यक्षततिलानि च । यवाः सिद्धार्थकाश्चैव अष्टांगोऽर्घः प्रकीर्तितः ॥" ॥३७॥

१ अत्रापि सर्वाबाधा इति बहुषु पुस्तकेषु ।

॥१९॥ विप्राणामिति ॥ प्रोक्षणीयैः पंचामृताभिषेकादिभिः एतैरन्यैर्विविधाः भोगाः स्रगादयः प्रदानैः मदुद्देशेन विप्रेभ्यो दीयमानैः वासोऽलंकारादिभिः एतैरहर्निशं क्रियमाणैर्या वत्सरेण प्रीतिर्भवति ॥ २० ॥ सा तस्मिन्सुचरिते सकृच्छ्रुत इत्यर्थः । श्रवणमुपलक्षणं श्रवणोऽधिकफलत्वमिति कश्चित् । श्रुतमित्याद्युत्तरान्वयि ॥ २१ ॥ मम जन्मनां कीर्तनं श्रुतं सदित्यर्थः । युद्धेष्वित्युत्तरान्वयि ॥ २२ ॥ तस्मिन्निति ॥ ब्रह्मर्षिभिः कृताः स्तुतयस्तथापि ममतावर्त्त इत्यादयः ब्रह्मर्षिः सुमेधाः बहुवचनं पूजायां वस्तुतस्तु युष्माभिः स्तुतयो याश्चेत्यनेन नारायणीसूक्तम् । तथा ब्रह्मणा ऋषिभिः सह या युष्माभिः कृताः महिषांतकरीसूक्तरूपा इत्यर्थः । यथावत्स्तुतौ

विप्राणां भोजनैर्होमैः प्रोक्षणीयैरहर्निशम् ॥ अन्यैश्च विविधैर्भोगैः प्रदानैर्वत्सरेण या ॥ २० ॥ प्रीतिर्मे क्रियते सास्मिन् सकृत्सुचरिते श्रुते ॥ श्रुतं हरति पापानि तथारोग्यं प्रयच्छति ॥ २१ ॥ रक्षां करोति भूतेभ्यो जन्मनां कीर्तनं मम ॥ युद्धेषु चरितं यन्मे दुष्टदैत्य-निबर्हणम् ॥ २२ ॥ तस्मिन् कृते वैरिकृतं भयं पुंसां न जायते ॥ युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृताः ॥ २३ ॥ ब्रह्मणा च कृतास्तास्तु प्रयच्छंति शुभां मतिम् ॥ अरण्ये प्रांतरे वापि दावाग्निपरिवारितः ॥ २४ ॥ दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः ॥ सिंहव्याघ्रानुयातो वा वने वा वनहस्तिभिः ॥ २५॥ राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बंधगतोऽपि वा ॥ आघूर्णितो वा वातेन स्थितः पोते महार्णवे ॥ २६ ॥ पतत्सु चापि शस्त्रेषु संग्रामे भृशदारुणे ॥ सर्वबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा ॥ २७ ॥

ऋषीणामपि कर्तृत्वं तथा प्रागेव निरूपणकृता इति च दृष्टा इत्यर्थकम् । लक्ष्मीतंत्रैकवाक्यत्वादित्यवधेयम् । एवं चैतानि सर्वाणि स्तोत्राण्यकर्तृकाणीति बोध्यम् ॥ २३ ॥ ब्रह्मणेति ॥ त्वं स्वाहेत्यादिरात्रिसूक्तरूपां शुभां मोक्षाभ्युदयसाधनीं प्रयच्छंति ददति । अरण्य इत्यादिश्लोकचतुष्टयमेकान्वयि । प्रांतरे दूरशून्यमार्गे अरण्य इत्यस्य दावाग्नीत्यादिनान्वयः । प्रांतर इत्यस्य दस्युभिरित्यादिनान्वयः ॥२४॥ वनहस्तिभिरित्यस्य वृतो वेति शेषः ॥२५॥ राज्ञेति ॥ क्रुद्धेन राज्ञा च वध्य इत्याज्ञप्त इत्यन्वयः । सर्वत्र वा समुच्चये महार्णवे पोते स्थितो वातेनाघूर्णित आकुलितश्च ॥२६॥ पतत्सु चेति ॥ सर्वासु बाधासु महापीडासु वेदनया दुःखेनाभ्यर्दितश्च ॥२७॥

स्मरन्निति ॥ मुच्यतेति कर्मकर्तरि तङ् । संकटं दुःखमुत्तरार्धमुत्तरान्वयि ॥ २८ ॥ दूरादेवेति ॥ मम चरितं स्मरतः मम प्रभावात् दूरात्पलायत इत्यन्वयः । उत्तरार्धस्य ऋषिरुवाचेत्यादिः । चंडो दारुणः ॥ २९ ॥ पश्यतामिति ॥ अनादरे षष्ठी । निरातंकाः निर्भयाः अंतरधीयत कर्मकर्तरि लङ् ॥ ३० ॥ दैत्याः शेषा दैत्याः ॥३१॥ आययुः प्राविशन् ॥३२॥ एवमिति ॥ संभूय दृश्यशरीरात्प्रादुर्भूय परिपालनं सर्वप्रकारेण रक्षणम् ॥ ३३ ॥ पृष्टं मोहकारणमुपसंहरति—तया इति ॥ प्रसूयते जनयति

स्मरन्ममैतच्चरितं नरो मुच्येत संकटात् ॥ मम प्रभावात्सिंहाद्या दस्यवो वैरिणस्तदा ॥२८॥ दूरादेव पलायंते स्मरतश्चरितं मम ॥ ऋषिरुवाच ॥ इत्युक्त्वा सा भगवती चंडिका चंडविक्रमा ॥२९॥ पश्यतामेव देवानां तत्रैवांतरधीयत॥ तेऽपि देवा निरातंकाः स्वाधिकारान्यथा पुरा ॥३०॥ यज्ञभागभुजः सर्वे चक्रुर्विनिहतारयः ॥ दैत्याश्च देव्या निहते शुंभे देवरिपौ युधि ॥ ३१ ॥ जगद्विध्वंसिनि तस्मिन् महोग्रेऽतुलविक्रमे ॥ निशुंभे च महावीर्ये शेषाः पातालमाययुः ॥३२॥ एवं भगवती देवी सा नित्यापि पुनः पुनः ॥ संभूय कुरुते भूप जगतः परिपालनम् ॥३३॥ तयैतन्मोह्यते विश्वं सैव विश्वं प्रसूयते ॥ सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति ॥३४॥ व्याप्तं तयैतत्सकलं ब्रह्मांडं मनुजेश्वर ॥ महाकाल्या महाकाले महामारीस्वरूपया ॥३५॥ सैव काले महामारी सैव सृष्टिर्भवत्यजा ॥ स्थितिं करोति भूतानां सैव काले सनातनी ॥३६॥ भवकाले नृणां सैव लक्ष्मी वृद्धिप्रदा गृहे ॥ सैवाभावे तथा लक्ष्मीर्विनाशायोपजायते ॥३७॥

अथार्चिता फलमुद्दिश्य कृतभक्तिर्विज्ञानमात्मतत्त्वज्ञानं यच्छति । तुष्टा फलोद्देशेन क्रियमाणकर्मणा ऋद्धिं प्रयच्छति । संहिताया अविवक्षितत्वान्न संधिः ॥ ३४ ॥ व्याप्तमिति ॥ महतो ब्रह्मादीनपि कलयति अधिकारेषु वर्तयति सा महाधिकाली तया महाकाले प्रलये महामारी संहारक्रिया तद्रूपया तयैतत्सकलं व्याप्तमित्यन्वयः ॥ ३५ ॥ सैवेति ॥ काले प्रलये महामारी संहारशक्तिः सृष्टिः सर्गशक्तिः अजा जन्महीना काले स्थितिकाले सनातनी नाशहीना ॥ ३६ ॥ भवकाले संपत्समये

वृद्धिप्रदेति लक्ष्मीविशेषणम् । अभावेऽप्यापत्काले ॥ ३७ ॥ पुष्पैर्धूपगंधदीपाद्यैः संपूजितेत्यर्थः ॥ ३८ ॥ इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने द्वादशोऽध्यायः ॥ १२ ॥ ऋषिरुवाच ॥ एतादिति ॥ एवमुक्तप्रकारेण धार्यत इति सृष्टिप्रलययोरुपलक्षणं हे भूपेति सुरथविशेषणम् ॥ १ ॥ विद्या तत्त्वज्ञानं तथैवेति समुच्चये । तया देव्या त्वं सुरथः एष वैश्यः समाधिः उत्तरार्धमुत्तरान्वयि । तथैवान्ये अन्ये चेत्यर्थः । विवेकिनः अधिगतलोकशास्त्राः ॥ २ ॥ मोह्यंत इति॥

स्तुता संपूजिता पुष्पैर्धूपगंधादिभिस्तथा ॥ ददाति वित्तं पुत्रांश्च मतिं धर्मे गतिं शुभाम् ॥ ३८ ॥ इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देव्याश्चरितमाहात्म्यं नाम द्वादशोऽध्यायः ॥ १२ ॥ ऋषिरुवाच ॥ एतत्ते कथितं भूप देवीमाहात्म्यमुत्तमम् ॥ एवंप्रभावा सा देवी ययेदं धार्यते जगत् ॥१॥ विद्या तथैव क्रियते भगवद्विष्णुमायया ॥ तया त्वमेष वैश्यश्च तथैवान्ये विवेकिनः ॥ २॥ मोह्यंते मोहिताश्चैव मोहमेष्यंति चापरे ॥ तामुपैहि महाराज शरणं परमेश्वरीम् ॥ ३ ॥ आराधिता सैव नृणां भोगस्वर्गापवर्गदा ॥ मार्कंडेय उवाच ॥ इति तस्य वचः श्रुत्वा सुरथः स नराधिपः ॥ ४ ॥ प्रणिपत्य महाभागं तमृषिं संशितव्रतम् ॥ निर्विण्णोऽतिममत्वेन राज्यापहरणेन च ॥ ५ ॥ जगाम सद्यस्तपसे स च वैश्यो महामुने ॥ संदर्शनार्थमंबाया नदीपुलिनमास्थितः ॥ ६ ॥ स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन् ॥ तौ तस्मिन्पुलिने देव्याः कृत्वा मूर्तिं महीमयीम् ॥ ७ ॥

मोहो मिथ्याज्ञानम् । उपैहीति वृद्धिश्छांदसी ॥ ३ ॥ आराधितेति ॥ सैवेत्यनेन सर्वत्र फलदात्रीयमेवेति सूचितम् । भोगः ऐहिकः । मार्कंडेय उवाच । इतीति । ॥ ४ ॥ प्रणिपत्येति ॥ संशितव्रतं तीव्रव्रतं निर्विण्णो दुःखाकुलः ममत्वं स्वीयत्वाध्यवसायः ॥ ५ ॥ जगामेति ॥ स राजा वैश्यश्चेत्यर्थः । एवमग्रेऽपि ॥ ६ ॥ देवीसूक्तं ऋग्वेदप्रसिद्धमित्येके । वस्तुतो देवीसूक्तं नमो देव्या इत्यादिकं पञ्चमाध्यायस्थस्तुतिरूपं तत्र सर्वदेवतायाः कूटस्थायाः महालक्ष्म्याः स्तोत्रं शुंभादिवधार्थिभि-

ईप्सम् । सर्वक्लेशपरिहारैश्वर्यादिफलकं तत्कामाभ्यां ताभ्यां जप्तमनुपदश्रुतत्वात् । बुद्धिसन्निहितत्वाच्चेदमेव देवीसूक्तं देवीपदेन च ग्रहीतुमुचितं लक्ष्मीतंत्रसंमतश्चायमर्थः। इति प्रागेव निरूपितमित्यपरे प्राणाधः संस्थितं बीजं हुताशनः । "त्रिकोणबिंदुनादाढ्यं प्रणवादि नमोऽतकम् । अंबिकासिद्धिदं ज्ञेयं देवीसूक्तं परं स्मृतम्" ॥ इति क्वचित्पठ्यते ॥ ७ ॥ अर्हणां पूजामग्नितर्पणं होमः पुष्पधूपौ गंधदीपाद्युपलक्षकौ आदौ यताहारौ अल्पाहारौ ततो निराहारौ अनेन हठयोगः सूचितः । तन्मनस्कौ देवीमनस्कौ समाहितौ त्यक्तबाह्यचेष्टौ ॥८॥ तौ बलिं च पशुकूष्मांडाद्युपहारं ददतुरेवेत्यस्य राजेत्यादि राजैव निजरुधिरसिक्तम् एतेन वैश्यस्य तत्त्वज्ञानेच्छया सात्त्वि-

अर्हणां चक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः ॥ निराहारौ यताहारौ तन्मनस्कौ समाहितौ ॥ ८ ॥ ददतुस्तौ बलिं चैव निजगात्रासृगु-
क्षितम् ॥ एवं समाराधयतोस्त्रिभिर्वर्षैर्यतात्मनोः ॥९॥ परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चंडिका ॥ देव्युवाच ॥ यत्प्रार्थ्यते त्वया भूप
त्वया च कुलनंदन ॥ १० ॥ मत्तस्तत्प्राप्यतां सर्वं परितुष्टा ददामि वाम् ॥ मार्कंडेय उवाच ॥ ततो वव्रे नृपो राज्यमविभ्रंश्यन्यज-
न्मनि ॥ ११ ॥ अत्रापि च निजं राज्यं हतशत्रुबलं बलात् ॥ सोऽपि वैश्यस्ततो ज्ञानं वव्रे निर्विण्णमानसः ॥ १२ ॥ ममेत्यह-
मिति प्राज्ञः संगविच्युतिकारकम् ॥ देव्युवाच ॥ स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान् ॥ १३ ॥

कत्वेन कथं राजसपूजायां प्रवृत्तिरित्यपास्तम् । राजसपूजाधिकारत्वेन ततस्तस्य सात्त्विकफले बाधकाभावाच्च । ब्राह्मणस्य सात्त्विकपूजया राजसफलवत् यतात्मनो-र्जितचित्तयोः ॥ ९ ॥ प्रत्यक्षमिति क्रियाविशेषणम् ॥ देव्युवाच ॥ यदित्युत्तरार्द्धम् । कुलनंदनेति वैश्यसंबोधनम् । ज्ञानार्थित्वे प्रशस्तत्वात् ॥ १० ॥ मत्त इति ॥ प्राप्यतां स्वीक्रियताम् । तत् प्रार्थ्यमानम् ॥ मार्कंडेय उवाच ॥ तत इत्युत्तरार्धम् । अविभ्रंशि चिरस्थायि ॥११॥ अत्रापि चेति ॥ अत्राथास्मिन् जन्मन्यपि बलाद्धतशत्रुबलमिति राज्यविशेषणम् । ज्ञानं तत्त्वज्ञानं निर्विण्णमानसः संसाराद्विरक्तमानसः ॥ १२ ॥ ममेत्यहमिति च यः संगस्तद्विच्युतिस्तन्नाशस्तत्करमिति ज्ञानवि-

शेषणम् । समासो न छांदसः । प्राज्ञमुक्तीच्छयातिबुद्धिमत्त्वाच्च स्वल्पैरिति स्वं राज्यमित्यसमस्तम् ॥ १३ ॥ हत्वेति ॥ तत्र राज्ये तवास्खलितमस्खलनं भविष्यति उत्तरार्धमुत्तरान्वयि ॥ १४ ॥ सावर्णिक इति ॥ यद्वाचकं नाम तदुपलक्षितो मनुरित्यर्थः । वैश्येत्याद्युत्तरान्वयि । अस्मत्त इति बहुवचनं स्वस्य सार्वात्म्यद्योतकम् ॥ १५ ॥ तमिति ॥ संसिद्ध्यै मुक्तये तादर्थ्ये चतुर्थी । ज्ञानं ब्रह्मज्ञानम् ॥ मार्कंडेय उवाच ॥ इतीति ॥ १६ ॥ बभूवेति ॥ देव्या इत्यपादाने पंचमी । सूर्यादिति सावर्णिर्भविता मनुरित्यस्य पुनरावृत्तिराचारात् । वक्ष्यमाणकात्यायनीतंत्राच्च । अंत्ये मनुरित्यनेन सावर्णिरित्यारभ्य सावर्णिर्भविता मनुरित्यंतोऽयं महामालामंत्र इति

हत्वा रिपूनस्खलितं तव तत्र भविष्यति ॥ मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः ॥ १४ ॥ सावर्णिको मनुर्नाम भवान् भुवि भविष्यति ॥ वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवांछितः ॥ १५ ॥ तं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति ॥ मार्कंडेय उवाच ॥ इति दत्त्वा तयोर्देवी यथाभिलषितं वरम् ॥ १६ ॥ बभूवांतर्हिता सद्यो भक्त्या ताभ्यामभिष्टुता ॥ एवं देव्या वरं लब्ध्वा सुरथः क्षत्रियर्षभः ॥ सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः ॥ १७ ॥ इति श्रीमार्कंडेयपुराणे सावर्णिके मन्वंतरे देवीमाहात्म्ये सुरथवैश्ययोर्वरप्रदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ समाप्तमिदं सप्तशत्याख्यं देवीमाहात्म्यम् ॥

सूचयतीति । तदुक्तं लक्ष्मीतंत्रे । " सम्यग्हृदि स्थिता सेयं जन्मकर्मावलिः स्तुतिः। एतां द्विजमुखाज्ज्ञात्वा अधीयानो नरः सदा ॥ विधूय निखिलां मायां सम्यग् ज्ञानं समश्नुते । सर्वसंपद आप्नोति धुनोति सकलापदः ॥ " इति सर्वेष्टसिद्धिः ॥ १७ ॥ इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते सप्तशतीव्याख्याने त्रयोदशोऽध्यायः ॥ १३ ॥

 

श्रीर्जयति ॥ सामविधिब्राह्मणोऽथ यः कामयते पुनर्न प्रत्याजायेयमित्यपुनर्भवमाधिकृत्य तदनुसंधेयोऽस्या मंत्र उक्तः । रात्रिं प्रपद्ये पुनर्भूं मयोभूं कन्यां शिखंडिनीं पाशहस्तां युवतीं कुमारिणीमादित्यः श्रीचक्षुषेवांतःप्राणाय सोमो गंधायापः स्नेहाय मनोऽनुज्ञाय पृथिव्यै शरीरमिति अस्य रात्रौ जपमात्रात्सिद्धिः । अस्य फलं मरणकालज्ञानं परमफलं तु मोक्ष इति तत्रैवोक्तम् । अयं च देवीविषयो मंत्रः कन्यां कुमारिणीमित्यत्र प्रत्यभिज्ञानात् रात्रिं तद्रूपाम् । " अस्यास्तनुस्तमोद्वारा निशा दिवसनाशिनी । " इति देवीमुपक्रम्य हरिवंशोक्तेः । पुनर्भूः असुरवधार्थं नानावतारग्रहात् अत एव मयोभूः प्राणिनां सुखदात्री कन्या । " अज्ञातपुंस्पर्शरतिरधृष्या चातिसुंदरी । " इति शिवोक्तेः । शिखंडिनी मयूरपिच्छभूषणा मयूरकलापध्वजा च । " भूषणैस्तु मयूराणामंगदाद्यैश्च भास्वरा । ध्वजेन शिखबर्हाणामुच्छ्रितेन समावृता ॥ " इति हरिवंशोक्तेः । पाशहस्ता असुरबंधनार्थं तथा युवतीः नित्यं बाल्यवार्द्धक्यावस्थारहिता । कंसमोहनावतारे क्षणं शैशवाभिनयेऽपि तदानीमेव यौवनाविष्करणोक्तेः । एवंभूताया रात्र्यभिमानिदेवतायाः प्रभावादादित्यश्चक्षुषे चक्षू रक्षितुं भवतु यत्नवान् भवति क्रमेणार्थः । मनस्तदधिष्ठात्री देवता अनुज्ञाय अनुज्ञामानं रक्षितुं भवतु । पृथिव्यै शरीरमित्यस्य विभक्तिपरिणामेन पृथिवीशरीरायेत्यर्थः । अथास्य सप्तशतीत्वव्यवहारप्रयोजकसप्तशतहोममंत्रविभागो दर्शितः कात्यायनीतंत्रे । " मार्कंडेय ऋषिः प्रोक्तो प्रथमश्लोकतः प्रिये । व्योमादिवर्णसंभूतो द्वितीयः स्वरसंयुतः ॥ " व्योम हकारस्तस्यादिः सकारो द्वितीयः स्वरः आकार इत्यर्थः । "नृपांतं प्रवदेन्मंत्राः सर्वे चाष्टादश प्रिये । वैश्योवाच ततः श्लोका व्योमाद्याः पंच मंत्रकाः॥" व्योमाद्य आद्यो येषामिति मृगनयनावत्समासः। " नृपस्योक्तिर्मांतवर्णो द्वादशस्वरसंयुतः।" मांतवर्णो यः स च द्वादशस्वरेण ऐकारेण युक्त आदिभूत इत्यर्थः। "सकारो बिंदुसंयुक्तश्चांते स्तो मनुरीदृशौ २६ ।" मनुर्मनू इत्यर्थः। वैश्योवाच पुनर्देवि स्वरैकादश आदितः । स्वरैकादशः एकारः । वह्निबीजं बिंदुयुक्तमंते स्यान्मनुपंचकम् । वह्निबीजं रमिति २० । मार्कंडेयऋषिप्रोक्तं मंत्रत्रयमुदाहृतम् । तादिवर्णं च भुवनस्वरयुग्वारुणं परम् ॥ भुवनस्वर औ तद्युक्तं वारुणं वौ इति । राजोवाचेति षण्मंत्रा भादितांताः शुभानने । अथोवाच ऋर्षि ज्ञानमस्तीत्यादि सुरेश्वरि ॥ सर्वेश्वरेश्वरी चांते मंत्रा वै द्वादश स्फुटाः । राजोवाचेति भगवानादिरंते विदां वर ॥ मन्त्रत्रयमिदं ख्यातं ततो ऋषिरुवाच ह । नित्यैव सा यदा चादौ प्रभुरंतेऽष्टमन्त्रकः ॥ ब्रह्मोवाच ततश्चोक्त्वा त्वं स्वाहादिमहासुरैः । अंते पंचदशैते स्युर्मंत्राश्च परमेश्वरि ॥ एवं स्तुत्यादिऋष्युक्तिर्वांतमंत्राश्च सप्त वै। ततो भगवद्वाक्ति-

स्तु भवेदादिमनुद्वयम् ॥ वंचितेति च ऋष्युक्तिर्मंत्रौ द्वौ परमेश्वरि । ऋष्युक्तिश्च तथेत्यादिमंत्रद्वयमुदाहृतम् ॥ सर्वे श्लोकास्त्विहाध्यायेऽष्ट्युक्सप्तति च क्रमात् । मध्ये चतुर्विंशतिका अर्द्धमंत्राः प्रकीर्तिताः ॥ सर्वाश्चाहुतयो ज्ञेयाश्चतुरुत्तरकं शतम् । उवाचांतास्त्वत्र बोध्या मंत्रा भुवनसंख्यकाः ॥ १४ ॥ इति प्रथमचरितनिर्णयो नाम विंशतिमं पटलम् ॥ २० ॥ १ ॥ ईश्वर उवाच । द्वितीये ऋष्युवाचेति नवषष्ट्याहुतिः क्रमात् ॥ २ ॥ ततस्तृतीयेऽध्याये तु ऋषिरुवाच देशिके । पंचत्रिंशच्च वै मंत्राः श्लोका ज्ञेया वरानने ॥ देव्युवाचेति मंत्रांतमंत्रश्लोकमतः प्रिये । ऋषिरुक्तिः पुनः श्लोकाः पंच मंत्राः सनातनाः ॥ एवमाहुतयस्तत्र चत्वारिंशच्चतुर्युताः ॥ ३ ॥ चतुर्थे क्रमतो देवि ऋष्युक्तिः षट् च विंशतिः । पुनस्तथैव ऋष्युक्तिः श्लोकौ द्वौ मंत्ररूपिणौ ॥ एवं स्तुतेति मंत्रोऽयमतिगुह्यं सुपाचनम् । देव्युवाचेति व्रियतां मंत्रोऽयं षोडशाक्षरः ॥ देवा ऊचुस्ततश्चोक्त्वा भगवत्या कृतं वदेत् । मंत्रोऽयं शतवर्णाद्यो द्वादशोत्तरयुक्पुनः ॥ ततो ऋषिरुवाचेति इति प्रसादितेति वै । चतुःसं- ख्यास्तु ते श्लोका मन्त्रास्तावंत एव हि ॥ श्लोकाश्चतुर्थेऽध्याये तु षट्त्रिंशत्परमेश्वरि । अर्धमंत्रद्वयेनैव चत्वारिंशद्धि युक्पुनः॥एवं मध्यचरित्रस्य पंचाशच्च शतोत्तरम् । तथा पंचायुतं मन्त्रा महालक्ष्म्या विभेदतः ॥ इति मध्यमचरित्रमंत्रनिर्णय एकविंशतितमं पटलम् ॥ २१ ॥ ४ ॥ ऋषिरुवाचेति पुरा विष्णुमायां प्रतुष्टुवुः । षण्मंत्राः श्लोकरूपास्ते देवा ऊचुस्ततः परम् ॥ नमो देव्यादितः श्लोकास्त्रिशद्विनम्रमूर्तिभिः । विष्णुमायादितो भ्रांतिरूपां ते त्रीणि षष्टियुक् ॥ अवतारे पृथङ्मन्त्रास्तेषां त्रिषष्टिराहुतिः । चितिरूपेण मंत्रेण आहुतित्रयमुच्चरेत् ॥ एवं मंत्रा अशीतिस्त ऋषिरुवाच इत्यथ । एवं स्तवादियुक्तानां त्वया कस्मान्न गृह्यते ॥ मंत्राः सप्तदशैते तु ऋष्युक्तिश्च निशम्येति वै । इत्यादित्रितयैर्मंत्रैः शुद्धभेदाः प्रकीर्तिताः ॥ अथ दूत उवाचेति देवि दैत्येश्वरः परम् । इत्यादि नव मंत्राश्च पुनर्ऋषिरुवाच ह ॥ इत्यु- क्तेत्यादिमंत्रेणैकेन च सरस्वति । देव्युवाचेति श्लोकास्तु चत्वारो मंत्रभेदतः ॥ दूतो वाक्येति पुनरप्यवलिप्तासि इत्यथ । मंत्राश्चत्वारि विज्ञेया देव्युवाच ततः परम् ॥ एवमेतद्बली शुंभो स च युक्तं करोतु यत् । इति मंत्रद्वयं श्लोकार्धंगमंत्राश्च ते नव ॥ एकोनत्रिंशच्च शतादधिका मंत्ररूपकाः । इति पंचमोऽध्यायः ॥ ५ ॥ ऋषिरुवाचे- त्याकर्ण्य श्लोकाश्चत्वार ईरिताः । पुनर्ऋषिरुवाचेति तेनाज्ञप्तस्ततः परम् ॥ मंत्रत्रयमिदं प्रोक्तं देव्युवाचेति वै तदा । दैत्येश्वरेण प्रहितो एकमंत्रः प्रकीर्तितः ॥ तत- श्चर्षिरुवाच इत्युक्तः सोऽभ्यधावत । इत्यादि । द्वादशश्लोकभेदास्ता देवताहुतयः क्रमात् ॥ इति षष्ठोऽध्यायः ॥ ६ ॥ ऋष्युक्ती राज्ञ इत्यादि त्रयोविंशतिमातरः ।

ऋषिरुवाच तावानीतौ मातृभेदद्वयं क्रमात् ॥ सप्तविंशत्यत्र देवि भवंत्याहुतयः क्रमात् । अत्राध्यायद्वये देवी धूम्राक्षी तु प्रकीर्तिता ॥ इति सप्तमोऽध्यायः ॥ ७ ॥
ऋषिश्चंडे च निहत इत्यध्यायावसानकम् । त्रिषष्ट्याहुतयः प्रोक्ता एका अर्द्धाहुतिः क्रमात् ॥ रक्ताक्षी देवता अष्टौ महाशक्तयः प्रकीर्तिताः । इत्यष्टमोऽध्यायः ॥८॥
राजा विचित्रमित्यादिश्लोकद्वयमुदाहृतम् । ऋषिश्चकार कोपं हि इत्यादिश्लोकरूपतः ॥ एकचत्वारिंशदिति आहुतिर्नवमे शुभे । इति नवमोऽध्यायः ॥ ९ ॥ ऋषि-
र्निशुंभं निहतमित्यादिद्वयमंत्रकम् । ततो देवीति मंत्रौ द्वौ एकैवाहं मनूत्तमौ ॥ पुनर्देव्यैकमंत्रेण व्यक्तमंत्रा उदीरिताः । ऋषिस्ततः प्रववृते सार्द्धद्वाविंशतित्रयम् ॥
द्वात्रिंशन्मनवस्तत्र एको ह्यर्द्धमनुर्मतः। दशमे सिंहमासीना शूलपाशविधारिणी ॥ मुख्या चतुर्भुजा बाणचापहस्ता शुभेक्षणा । इति दशमोऽध्यायः ॥१०॥ इति द्वाविं-
शतितमं पटलम् ॥ २२ ॥ ऋषिः सुमेधा विख्यातः प्रोक्तो देव्या हते शुभे । चतुस्त्रिंशत्तथा श्लोका मंत्रास्तत्संख्यकाश्च ते ॥ ततो देव्येकमंत्रेण वरदाहं सुरेश्वरि ।
देवा ऊचुस्तथा सर्वबाधाप्रशमनं तथा ॥ श्लोकेनैकेन देवेशि देव्युवाच ततः परम् । वैवस्वतेंऽतरे प्राप्तेत्यादिश्लोकाश्चतुर्दश ॥ सार्धा सर्वाहुतिर्देवि पंचाशत्पंचसंयुता ।
वैष्णवी देवता ह्यत्र महागरुडवाहिनी ॥ इत्येकादशोऽध्यायः ॥ ११ ॥ देव्युवाचेति तत एभिः स्तवैश्च मां तथा । दुरेत्यर्धेन सहिता अष्टाविंशतिरूपकाः ॥ ततश्च-
र्षिरुवाच इत्युक्त्वा श्लोकमादितः । अर्द्धयुङ्नवभिः श्लोकैर्मंत्रास्तत्संख्यका मताः ॥ एवं तु द्वादशेऽध्याये एकचत्वारिंशदाहुतिः । इति द्वादशोऽध्यायः ॥ १२ ॥
ततस्त्रयोदशेऽध्याये ऋषिरुवाच इत्यथ । एतत्ते कथितं भूपेत्यादिसार्धत्रयं मनुः ॥ मनुचतुष्टयमित्यर्थः । मार्कंडेय उवाचेति इति तस्य वचोदितः । श्लोकषट्कं ततो
देवी उवाच परमेश्वरी ॥ यत्प्रार्थ्यते त्वया भूप श्लोकेनैकेन तोषकृत् । मार्कंडेय उवाचेति ततो वक्ष्ये मनुत्रयम् ॥ देव्युवाच पुनश्चैव स्वल्पश्लोकत्रयेण वै ।
अर्धानामवमंत्रत्वाद्भवत्यत्र षडाहुतिः ॥ षट्संख्याहुतिरित्यर्थः । ततो मार्कंडेय इति इति दत्त्वा तयोरिति । द्वौ मंत्रौ पुनरुच्चार्य सावर्णिर्भविता मनुः ॥ एकोनत्रिं-
शत्संख्याकाहुतिरत्र विधीयते । एवं त्रयोदशेऽध्याये होमतर्पणकर्मणि ॥ शतानि सप्त संख्यानि तव प्रोक्तानि शैलजे । सकारादिनकारांतो मनुः परमदुर्लभः ॥
स संप्रदायविधिना ज्ञातव्यो मम वल्लभे । अन्यथा विकलो मन्त्रः सत्यं सत्यं मयोदितम् ॥ तत्र मन्त्रा स्वाहान्ता एते मन्त्रा नमोंऽताः । तर्पणे तर्पयाम्यंताः । इति
त्रयोविंशतितमं पटलम् ॥ २३ ॥ इति त्रयोदशोऽध्यायः ॥ १३ ॥ केचित्तु मन्त्रं पठित्वा ततस्तदध्यायदेवतायै नम इति पूजन इत्याहुः । एवं होमाशक्तौ जयंती-

मन्त्रेणैव होम उक्तोऽन्यत्र पूजा चेति दिक् । कात्यायनीतंत्रोक्तमंत्रविभाग एवाभियुक्तैः स्पष्टीकृत्य दर्शितस्तथाहि । अष्टसप्तत्युत्तराणां श्लोकानां शतपंचकम् । प्रोक्तं सप्तशतीस्तोत्रं तत्सप्तशतसंख्यया ॥ १ ॥ विभज्य जुहुयान्मंत्रमिति कात्यायनीमतम् । मार्कंडेय उवाचैकः सावर्णाद्यास्ततः परम् ॥ २ ॥ श्लोकमंत्राः सप्तदश अर्द्धश्लोकात्मकस्ततः । एकोनविंशदेवं स्युर्वैश्योक्तिर्विंशतिस्तथा ॥ ३ ॥ पुनरर्द्धं पुनः श्लोकत्रयमर्धं पुनर्भवेत् । पंचविंशतिरेवं स्याद्राजा षड्विंशतिस्ततः ॥ ४ ॥ अर्द्धश्लोकात्मकौ मन्त्रौ मन्त्रसंख्या प्रकीर्तिता ॥ ५ ॥ पुनरर्द्धं पुनः श्लोकत्रयमर्द्धं पुनर्भवेत् । मार्कंडेयः पुनश्चार्द्धश्लोकः श्लोकात्मकः पुनः ॥ ६ ॥ अर्द्धश्लोकात्मको मन्त्रो राजार्द्धश्लोकमंत्रकः । मन्त्रश्चत्वारिंशदेवं श्लोकमंत्रचतुष्टयम् ॥ ७ ॥ पुनरर्द्धमृषिश्चार्द्धं श्लोकमंत्राः पुनर्दश । पुनरर्द्धं पुना राजा एकोना षष्टिरुच्यते ॥ ८ ॥ पुनरर्द्धं पुनः श्लोकः पुनरर्द्धं पुनर्ऋषिः । पुनरर्द्धं पुनः श्लोकाः षण्मंत्राः पुनरर्द्धकम् ॥ ९ ॥ निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः । इत्येवपाठो मन्त्राणामेकसप्ततिरुच्यते ॥ १० ॥ ब्रह्मार्द्धश्लोकमंत्रोऽथ श्लोकमंत्रास्त्रयोदश । अर्द्धश्लोक ऋषिश्चार्द्धश्लोकः श्लोकास्तु पंच वै ॥ ११ ॥ पुनरर्द्धं तु मन्त्राणां स पंचनवतिः स्मृता । भगवानर्द्धमंत्रेर्द्धे ऋषिश्लोकार्द्धकं पुनः ॥ १२ ॥ श्लोकः पुनर्ऋषिश्लोकद्वयमंत्रद्वयं भवेत् । श्लोकानामष्टसप्तत्या चतुर्भिरधिकं शतम् ॥ १३ ॥ १ ॥ अध्यायादावेव ऋषिरुवाचेति सकृन्मनुः । अष्टषष्टिमिताः श्लोकास्तावंतो मनवः स्मृताः ॥ १४ ॥ एकोनसप्ततिः सर्वेऽध्याये मन्त्रा द्वितीयके ॥ २ ॥ आदावृषिरुवाचैकः पंचविंशत्ततः परम् ॥ १५ ॥ निहन्यमानाद्याः श्लोका मुखरागाकुलाक्षरम् । इत्यंता देव्युवाचैको गर्ज गर्जेति चापरः ॥ १६ ॥ श्लोका ऋषिरुवाचेति पुनश्च श्लोकपंचकम् । चतुश्चत्वारिंशदेवं सर्वे मन्त्रास्तृतीयके ॥ १७ ॥ ३ ॥ भगवत्या कृतं सर्वमित्यर्द्धश्लोकमंत्रकः । यदयं निहतः श्लोकद्वये देवी ततः परम् ॥ १८ ॥ ऋषिश्लोकास्तु चत्वारो मनवः परिकीर्तिताः । षट्त्रिंशच्छ्लोककेऽध्याये चत्वारिंशद्द्वयाधिकम् ॥ १९ ॥ ४ ॥ षट्सप्ततिश्लोकयुक्तेऽध्याये मन्त्रास्तु पंचमे । एकोनविंशदधिकं शतं कात्यायनीमतम् ॥ २० ॥ एको ऋषिरुवाचेति पुरा शुंभादयश्च षट् । श्लोकमंत्रास्ततो देवा ऊचुश्चैवाष्टमो मनुः ॥ २१ ॥ नमो देव्यादिकाः श्लोकाः पंच मन्त्राः प्रकीर्तिताः । त्रयोदशैवं मन्त्रास्तु या देवीत्यादयोऽपि च ॥ २२ ॥ एकविंशतिकाः श्लोका श्चांत्यंतास्तेषु मन्त्रकाः । प्रतिश्लोकं त्रयो मन्त्रा ज्ञेयाः सर्वे त्रिषष्टिकाः ॥ २३ ॥ पुनः श्लोकात्मको मन्त्रस्त्रिमंत्रः श्लोककः पुनः । त्रयोविंशच्छ्लोककेषु मन्त्रा वै सप्तषष्टिकाः ॥ २४ ॥ या देवी सर्वभूतेषु विष्णुमायेति शब्दिता । नमस्तस्यै

इति प्रोक्तो विंशत्यक्षरको मनुः ॥ २५ ॥ नमस्तस्यै इति प्रोक्तो द्वितीयश्चतुरक्षरः । अष्टाक्षरस्तृतीयोऽपि नमस्तस्यै नमो नमः ॥ २६ ॥ एवं द्वात्रिंशतिश्लोकैर्ज्ञेयं तन्त्रत्रयं बुधैः । पूर्वैस्त्रयोदशैर्मंत्रैः सहाशीति रुदाहृता ॥ २७ ॥ स्तुता सुरेति च श्लोकद्वयं चैव पुनर्ऋषिः । पुनः सप्तदश श्लोका ऋषिः श्लोकत्रयं ततः ॥ २८ ॥ दूतश्चैव नव श्लोका ऋषिरेकोंऽविका ततः । एक इत्यस्यैकश्लोक इत्यर्थः । चतुःश्लोकी पुनर्दूतचतुःश्लोकी पुनः शिवा ॥ २९ ॥ श्लोकद्वयं मिलित्वा तु चत्वारिंशन्नवाधिकम् । अशीत्यादि च संयोगे एकोनत्रिंशताधिकम् ॥ ३० ॥ शतमेवं तु विज्ञेयमाहुतीनां च पंचमे ॥ ५ ॥ विंशतिः श्लोकसंयुक्ते षष्ठेऽध्याये प्रकीर्तिताः ॥ ३१ ॥ सर्वे श्लोका मन्त्ररूपा देव्यैकाथ ऋषित्रयम् । चतुर्विंशतिमंत्राणामित्येवं परिकीर्तिताः ॥ ३२ ॥ ६ ॥ पंचविंशतिश्लोकयुक्तेऽध्याये मन्त्रास्तु सप्तमे । सर्वे मन्त्राः श्लोकरूपा ऋष्युवाचद्वयं ततः॥ ३३ ॥ सप्तविंशतिरेवं तु मन्त्रसंख्या प्रकीर्तिता ॥ ७ ॥ सार्धैकषष्टिश्लोकाढ्येऽष्टमेऽध्याये प्रकीर्तिता ॥ ३४ ॥ एकषष्टिश्लोकमंत्रा अंतेऽर्धश्लोकमंत्रकः । आदावेको ऋषिश्चैव त्रिषष्टिर्मंत्रसंततिः ॥ ३५ ॥ एकोनचत्वारिंशाद्भिः श्लोकैर्युक्ते समीरिताः ॥ ८ ॥ अध्याये नवमे मन्त्रास्तावंतोऽथ मनुद्वयम् ॥ ३६ ॥ राजा ऋषिश्चेति चैकचत्वारिंशन्मनुस्त्वयम् ॥ ९ ॥ सार्द्धसप्तान्वितैर्विंशश्लोकैस्तु दशमेऽन्विते ॥ ३७ ॥ सप्तविंशतिमंत्रास्तु श्लोकरूपास्ततोंऽतिमः । अर्द्धश्लोकात्मको मन्त्रो ऋष्युवाचद्वयं तथा ॥ ३८ ॥ देव्युवाचद्वयं चैव द्वात्रिंशन्मन्त्रसंग्रहः ॥ १० ॥ श्लोकानां सार्द्धपंचाशज्ज्ञेयमेकादशे स्फुटम् ॥ ३९ ॥ पंचाशच्छ्लोकमंत्रास्तु अंतेऽर्द्धश्लोकमंत्रकः । शाकंभरीति विख्यातिं तदा यास्याम्यहं भुवि ॥ ४० ॥ एषोऽर्द्धमंत्र इत्याहुः केचिदत्र विचक्षणाः । देवीद्वयमृषिश्चैको देवा एकमितीरितम् ॥ ४१ ॥ पंचाधिकास्तु पंचाशन्मंत्रा ज्ञेयाः परिस्फुटम् ॥ ११ ॥ अष्टत्रिंशच्छ्लोकयुक्तेऽप्यध्याये द्वादशात्मके ॥ ४२ ॥ चत्वारिंशच्च एकश्च मन्त्रास्तत्राहुतिद्वयम् । अर्द्धश्लोकात्मकश्लोकाः सप्तत्रिंशन्मिता चर्षिः ॥ ४३ ॥ देव्युवाचेति चैकैकमेवं संख्या स्फुटोदिता ॥ १२ ॥ त्रयोदशे सार्द्धसप्तदशश्लोकाः प्रकीर्तिताः ॥ ४४ ॥ ऋषिरुवाचेत्यारभ्य भोगस्वर्गापवर्गदा । इत्यंताः पंच मन्त्रास्ते मार्कंडेयस्ततः परम् ॥ ४५ ॥ इति तस्य वचः श्रुत्वेत्यर्द्धमंत्रस्तथा स्मृतः । श्लोकमंत्रास्ततो ज्ञेयाः पंचैवाप्यर्द्धपद्यकम् ॥ ४६ ॥ देव्युवाचेति मन्त्रोऽयं ततः श्लोकस्तु मन्त्रकः । मार्कंडेयस्ततो मन्त्रः श्लोकौ मन्त्रद्वयं ततः ॥ ४७ ॥ ततो देवीषडर्द्धानि सप्त मन्त्राः प्रकीर्तिताः । मार्कंडेयस्ततो मन्त्रद्वयं मन्त्रत्रयं स्मृतम् ॥४८॥ आवृत्त्या त्वधिको मन्त्रः सावर्णिर्भविता मनुः । एकोनविंशत्संख्याका मन्त्रा अत्र स्मृता बुधैः ॥४९॥

केचित्तु । एकादशार्द्धाहुतयो द्वादशश्लोकमंत्रकाः। उवाच वचनैः षड्भिर्मंत्रास्ते उक्तसंख्यकाः ॥ इत्याहुः ॥९०॥ तत्र कात्यायनीतन्त्रविरोधः स्पष्ट एवेति दिक् ॥२३॥ अथ वाराहीतन्त्रे । चंडीपाठफलं देवि शृणुष्व गदतो मम । एकावृत्त्यादिपाठानां प्रत्यहं पठतां नृणाम् ॥ १ ॥ संकल्प्य पूज्यान्संपूज्य न्यस्यांगेषु मनून् सकृत् । पश्चाद्बलिप्रदानेन फलमाप्नोति मानवः ॥ २ ॥ न्यासप्रकारश्च नवार्णविधाने उक्तस्ते । उपसर्गोपशांत्यर्थं त्रिरावृत्तं पठेन्नरः । ग्रहदोषोपशांत्यर्थं पंचावृत्तं वरानने ॥ ३ ॥ महामाये समुत्पन्ने सप्तावृत्तमुदीरयेत् । नवावृत्त्या भवेच्छांतिर्वाजपेयफलं लभेत् ॥ ४ ॥ मुच्येत्प्राणातिजाद्भयादिति वा ॥ ४ ॥ राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत् । अर्कावृत्त्या कामसिद्धिर्वैरिनाशश्च जायते ॥ ५ ॥ मन्वावृत्त्या रिपुर्वश्यस्तथा स्त्री वश्यतामियात् । सौख्यं पंचदशावृत्त्या श्रियमाप्नोति मानवः ॥ ६ ॥ कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः । राजभीतिविनाशाय वैरस्योच्चाटनाय च ॥ ७ ॥ कुर्यात्सप्तदशावृत्तं तथाष्टादशकं प्रिये । महारणविमोक्षाय विंशावृत्तं पठेन्नरः ॥ ८ ॥ पंचविंशावर्त्तनाच्च भवेद्बंधविमोक्षणम् । संकटे समनुप्राप्ते दुश्चिकित्सभये सदा ॥ ९ ॥ जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते । वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये ॥ १० ॥ तथैव त्रिविधोत्पाते तथा चैवातिपातके । कुर्याद्यत्नाच्छतं वृत्तं ततः संपद्यते शुभम् ॥ ११ ॥ विपदस्तस्य नश्यंति ततो याति परां गतिम् । श्रियो वृद्धिः शतावृत्त्या राज्यवृद्धिस्तथापरा ॥ १२ ॥ मनसा चिंतितं देवि सिद्ध्येदष्टोत्तराच्छतात् । शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते ॥ १३ ॥ सहस्रावर्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा । प्राप्तो मनोरथान्कामान्नरो मोक्षमवाप्नुयात् ॥ १४ ॥ यथाश्वमेधः क्रतुषु देवानां च यथा हरिः । स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः ॥ १५ ॥ उत्पत्तिचरितं स्तोत्ररूपत्रितयात्मकत्वात् । अथवा बहुनोक्तेन किमन्येन वरानने ॥१६॥ चंड्याः शतावृत्तपाठात् सर्वाः सिद्ध्यंति सिद्धयः । एतास्वेव कामनासु तत्तत्संख्याकस्तोत्रपाठे विशेष उक्तो मरीचिकल्पे । रात्रिसूक्तं जपेदादौ मध्ये सप्तशतीस्तवम् ॥ १७ ॥ प्रांते तु जपनीयं वै देवीसूक्तमिति क्रमः । एवं संपुटितं स्तोत्रं पूर्वोक्तफलदायकम् ॥ १८ ॥ अत्र रात्रिसूक्तं च वैदिके इति केचित् । रात्रिसूक्तं प्रथमाध्यायस्थं विश्वेश्वरीसूक्तं देवीसूक्तं नमो देव्या इत्यादिपंचमाध्यायस्थमित्यपरे । अन्योऽपि प्रकारस्तंत्रोक्तः । कृष्णाष्टमीं समारभ्य यावत्कृष्णचतुर्दशी । वृद्धैकोत्तरया जप्यं पूर्वसंपुटितं तु तत् ॥ १९ ॥ एवं देवि मया प्रोक्तः पौरश्चरणिकः क्रमः । तदंते हवनं कुर्यात्प्रतिश्लोकेन पायसा ॥ २० ॥ प्रतिश्लोकेनेति कात्यायनीतंत्रोक्तमंत्रोपलक्षणम् । रात्रिसूक्तं प्रतिऋचं तथा देव्याश्च

सूक्तकमिति पक्षांतरे । ऋचमित्युक्तमंत्रोपलक्षणम् । हुत्वांते प्रजपेत्स्तोत्रमादौ पूजादिकं पुनरित्यपरश्च । अथातः संप्रवक्ष्यामि नवरात्रविधानकम् । जपेदेकोत्तरां वृद्धिं दिनानि नव संख्यया ॥ २१ ॥ नवाक्षरीविधानेन संपूज्याथ विचक्षणः । सहस्रं प्रजपेन्मंत्रं प्रत्येकं च यथाविधि ॥ मध्ये चैकोत्तरां वृद्धिं जपेद्देव्याः स्तवं मनुम् । हुत्वा दशांशतो होमं तत्र सिद्धिं समाप्नुयात् ॥ २२ ॥ अपरश्च । जपेद्बिल्वं समाश्रित्य मासमेकं तु यो नरः । हुत्वा बिल्वदलैर्मासं मधुरत्रययोगतः ॥ २३ ॥ हुत्वा दशांशतो वापि कमलैः क्षीरसंयुतैः । धनदेन समां लक्ष्मीं प्राप्नुयादुत्तमां ध्रुवम् ॥ २४ ॥ हरगौरीतन्त्रे । श्रीकामः पुष्टिकामो वा सृष्टिमार्गक्रमेण तु । जपेच्छक्रादिमारभ्य शुंभदैत्यवधावधि ॥ आदिमारभ्य प्रजपेत्पश्चाच्छेषं समाचरेत् । शांत्यादिकामः सर्वत्र स्थितिमार्गक्रमेण तु ॥ सावर्णिः सूर्यतनयः सावर्णिर्भविता मनुः । संकटे चांत्यमारभ्य पश्चादादिं समापयेत् ॥ ब्राह्मणद्वारा करणे तु विशेष उक्तस्तत्रैव । पंच स्वर्णाः शतावृत्ते लक्षावृत्ते तु तत्त्रयम् ॥ पंचावृत्ते स्वर्णमेकं त्रिरावृत्ते तदर्द्धकम् । एकावृत्ते पादमेकं दद्याद्वा शक्तितो बुधः ॥ इति । प्रथमचरित्रस्य ब्रह्मा ऋषिः गायत्री च्छंदः महाकाली देवता नन्दा शक्तिः रक्तदंतिका बीजमग्निस्तत्त्वं महाकालीप्रीत्यर्थं जपे विनियोगः । मध्यमचरित्रस्य विष्णुर्ऋषिः उष्णिक् छन्दः महालक्ष्मीर्देवता शाकंभरी शक्तिः दुर्गा बीजं वायुस्तत्त्वं महालक्ष्मीप्रीत्यर्थे जपे विनियोगः । अंत्यचरित्रस्य शंकर ऋषिः अनुष्टुप् छन्दः महासरस्वती देवता भीमा शक्तिः भ्रामरी बीजं रविस्तत्त्वं सरस्वतीप्रीत्यर्थे जपे विनियोगः । शतावृत्तादौ कामनाभेदेन होमभेद उक्तः वाराहीतंत्रे । हुवेत्प्रदीपिते वह्नौ तिलधानादितंडुलान् । धर्मार्थकामसंवृद्ध्यै मोक्षार्थी पायसं हुवेत् ॥ मारणे मोहने चैव तथोच्चाटनकर्मणि । हुवेन्मांसं त्रिमध्वक्तं मोहने मधु पायसम् ॥ स्तंभने च मातुफलं वश्ये तु सितसर्षपान् । धर्मार्थकाममोक्षार्थं पूर्वाशाभिमुखो हुवेत् ॥ मोहने मारणे चैव हुवेद्वै दक्षिणामुखः । उच्चाटने उत्तरास्य इत्याह भगवान् भवः ॥ क्रोडतंत्रे । प्रत्येकावर्तनं देवि हयमेधेन संमितम् । त्रिरावृत्त्या भवेत्कामान्पंचावृत्त्या रिपूञ्जयेत् ॥ इति सर्वेष्टसिद्धिः ॥ कात्यायनीं विद्महे कन्यां कुमारीं धीमहि । तन्नो दुर्गा प्रचोदयात् ॥ इत्येतद्गायत्री यजुर्वेदे । अथ गायत्रीप्रयोगांतरं कात्यायनीतंत्रे । पूर्वाह्णे षोडशांगुलमितं चतुरंगुलोन्नतं स्थंडिलं कृत्वा तत्र शुद्धगोघृतेनैकस्मिन्पात्रे रुद्रवर्तिषु त्रयोदश दीपान्प्रज्वाल्य तेषु प्रथमदीपे प्रथमाध्यायदेवतामावाह्य आसनपाद्यादिगंधदानांतां पूजां कृत्वा पुष्पसमर्पणसमये वक्ष्यमाणैर्नवभिः श्लोकैः प्रतिश्लोकं पुष्पाणि समर्पयेत् । ततः प्रथमाध्यायसमाप्तौ वक्ष्यमाणश्लोकैः पुष्पाणि समर्प्य धूपदीपौ दत्त्वा

पायसनैवेद्यं दत्त्वा तांबूलं दक्षिणां च दत्त्वा नीराज्य एकं ब्राह्मणं कुमारीं सुवासिनीं च भोजयेत् संकल्पयेद्वा । एवं तत्तदध्यायदेवतावाहनादि ब्राह्मणभोजनांतं प्रत्यध्यायं कुर्यात् । अंते प्रभूतनैवेद्यादिभिर्महापूजा । अनुग्रहे पूर्वाह्णे समाप्तिः । निग्रहे पराह्णे । श्लोकास्तु, विश्वेश्वरीं जगद्धात्रीं० ॥ १ ॥ स्तुता सुरैः पूर्वमभीष्टसंश्रया करोतु सा नः शुभहेतु० ॥ २ ॥ या सांप्रतं चोद्धतदैत्यतापितै० ॥ ३ ॥ या च स्मृता तत्क्षणमेव हंति नः करोतु सा नः शुभहेतुरी० ॥ ४ ॥ सर्वबाधाप्रशमनं० ॥ ५ ॥ अत्र वैरिनाशनमित्यत्र रोगनाशनमित्याद्यूहः । एवं दैत्यतापितैरित्यपि । सर्वमंगलमांगल्ये० ॥ ६ ॥ सृष्टिस्थितिविनाशानां० ॥ ७ ॥ शरणागतदीनार्त्त० ॥ ८ ॥ सर्वस्वरूपे सर्वेशे० ॥ ९ ॥ एतेऽनुग्रहे नव श्लोकाः । वश्ये तु शेषः । ॐ ह्रीं रक्तचामुंडे तूर्णममुकं मे वशमानय स्वाहा अनेन प्रत्यध्यायमाद्यंतयोः पूजा सर्वांते अयुतमंत्रश्च दशसाहस्रम् । " होमयेत्कटुतैलेन रक्तचंदनराजिकाः । सहस्राहुतिमात्रेण राजानं वशमानयेत् ॥ मधुना चाशोकपुष्परात्रौ हुत्वा तु पूर्ववत् । चक्रवर्ती भवेद्वश्यश्चंडीमंत्रप्रभावतः ॥ " अंते शतं ब्राह्मणाः कुमार्यश्च भोजनीयाः । धर्मार्थं बिल्वपत्रैः पूजा वश्यार्थं करवीरैर्जपाकुसुमैर्वा पुत्रार्थं तुलसीदलैः पुष्ट्यर्थं पंकजैः । महाप्रयोगे तु षोडशमाषैः स्वर्णमूर्तिं कृत्वा कलशस्थापनं कृत्वा तदग्रे घटेर्गलयंत्रे वा दीपं स्थापयेत् । यंत्रमंत्यं सर्वसाधारणं स्थापनं महति कार्ये ऊनपंचाशद्दिनानि मध्ये चतुर्विंशतिः तदर्धमल्पे । ब्राह्मणास्त्रयो महत्कार्ये प्रयोगकर्तारः अल्पे एकः। निग्रहे तु सर्वबाधाप्रशमनमित्यस्याग्रे एवमुक्त्वा समुत्पत्स्येति पठेत् । अत्र प्रयोगे क्वचित्तर्पणमप्युक्तम् । त्रयोदश पात्राणि दुग्धेनापूर्याद्यंतयोः पुष्पांजलिं दत्त्वा प्रतिश्लोकं प्रथमाध्यायदेवतां तर्पयामीति प्रयोगेण तर्पयेत् । ततस्त्रयोदशस्वग्निषु क्रमात्तत्तदध्यायदेवता आवाह्य संपूज्य प्रतिश्लोकमों प्रथमाध्यायदेवतायै नमः स्वाहेति मंत्रेण पायसेन जुहुयात् । प्रत्यहं यावत्प्रयोगसमाप्ति त्रयोदश ब्राह्मणाः सुवासिन्यः कुमार्यः एकोऽनुपनीतोऽष्टवर्ष एक उपनीतश्च भोजनीयाः । परार्थे प्रयोगे तु सत्याः संतु यजमानस्य कामा इति प्रतिश्लोकं प्रत्यध्यायं वा पठेत् । इदं सर्वत्र परार्थे प्रयोगे तु बोध्यम् । अत्र त्रयोदशपात्रेषु त्रयोदश दीपा इत्युत्तमः पक्षः। एकपात्रे त्रयोदश दीपा इति मध्यमः। एकस्मिन्नेव पात्रे त्रयोदश दीपा इति देवता चेत्यधमः पक्षः । यथोक्तविधिदीपेषु अक्षतपुंजेषु जलपात्रेषु अग्निषु वा कार्यः इत्युपदेशः। अथ प्रयोगांतराणि कात्यायनीतंत्रोक्तानि । प्रतिश्लोकमाद्यंतयोः मंत्रं जपेन्मंत्रसिद्धिः । सप्रणवमनुलोमव्याहृतित्रयमादौ अंते तु विलोमं तदित्येवं प्रतिश्लोकं कृत्वा शतप्रवृत्तपाठे तु शीघ्रसिद्धिः । प्रतिश्लोकमादौ जातवेदस इति ऋचं पठेत् ।

अपमृत्युनिवारणायादावंते शतं त्र्यंबकमंत्रं जपेत् । प्रतिश्लोकं तन्मंत्रजप इति वा प्रतिश्लोकं शरणागतदीनार्त्तश्लोकं पठेत्सर्वकार्यसिद्धिः । प्रतिश्लोकं करो तु सा नः शुभेत्यर्द्धं पठेत् सर्वकामाप्तिः । स्वाभीष्टवरप्राप्तये एवं देव्या वरं लब्ध्वेति श्लोकं प्रतिश्लोकं पठेत् । सर्वापन्निवारणार्थं प्रतिश्लोकं दुर्गे इति पठेत् । अस्य केवलस्यापि श्लोकस्य कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः । सर्वबाधेत्यस्य लक्षजपे श्लोकोक्तं फलम् । इत्थं यदा यदेति श्लोकस्य जपे महामारीशांतिः । ततो वत्रे नृपो राज्यमिति मन्त्रस्य लक्षजपे पुना राज्यलाभः । हिनस्ति दैत्यतेजांसीत्यनेन सदीपबलिदाने घंटाबंधने च बालग्रहशांतिः । आद्यावृत्तिमनुलोमेन त्रयोदशाध्यायं पठित्वा ततो विपरीतक्रमेण द्वितीयां कृत्वा पुनरनुलोमेत्येवमावृत्तिमनुलोमेत्येवं दशाध्यायं पठित्वा ततो विपरीतमावृत्तित्रये उक्तेषु प्रकारेषु शीघ्रं कार्यसिद्धिः। सर्वापत्तिनिवारणाय दुर्गे स्मृतेत्यंतेऽर्द्धं ततो यदंति यच्च दूरके इत्यृचं तदंते दारिद्र्यदुःखेत्यर्द्धमेवं कार्यानुसारेण लक्षमयुतं सहस्रं शतं वा जपः । कांसोऽस्मीत्यृचं प्रतिश्लोकं पठेल्लक्ष्मीप्राप्तिः । मारणार्थमेवमुक्त्वा समुत्पत्येति श्लोकं पठेत् मारणोक्तावृत्तिभिः फलसिद्धिः । ज्ञानिनामपि चेतांसीति श्लोकस्तस्य जपमात्रेण सद्यो मोहनमित्यनुभवसिद्धम् । प्रतिश्लोकं तच्छ्लोकपाठे त्ववश्यम् । रोगानशेषानिति श्लोकस्य प्रतिश्लोकं पाठे पृथग्जपे वापि विद्याप्राप्तिः । भगवत्या कृतं सर्वमित्यादिद्वादशोत्तरशताक्षरो मंत्रः सर्वकामदः सर्वापन्निवारणश्च । देवि प्रपन्नार्तिहर इति श्लोकस्य यथाकार्यं लक्षायुतसहस्रशतान्यतमे प्रतिश्लोकं पाठे सर्वापन्निवृत्तिः सर्वकामाप्तिश्च। एषु प्रयोगेषु प्रतिश्लोकं दीपाग्रे केवलमेव वा नमस्कारकरणे शीघ्रं सिद्धिः । प्रतिश्लोकं कामबीजसंपुटितस्यैकचत्वारिंशद्दिनेषु त्रिरावृत्तौ सर्वकार्यसिद्धिः । एकविंशतिपर्यंतमुक्तरीत्या प्रत्यहं त्रयोदशावृत्तौ वशीकरणम् । मायाबीजपुटितस्य फट्बीजस्य पल्लवसहितस्य सप्तदिनपर्यंतं त्रयोदशावृत्तौ उच्चाटनसिद्धिः । तादृशस्यैव दिनचतुष्टयमेकादशावृत्तौ सर्वोपद्रवनाशः । एकोनपंचाशद्दिनपर्यंतं प्रतिश्लोकं बीजसंपुटितस्य पंचदशावृत्तौ लक्ष्मीप्राप्तिः । प्रतिश्लोकमैंबीजसंपुटितस्य शतावृत्त्या विद्याप्राप्तिः । ॐ ह्रौं नम इत्येतत्संपुटितप्रथमचरित्रस्य प्रतिश्लोकं पाठः। आदावंते क्रमेण श्लोकांते विपरीतक्रमेणेत्यर्थः। एवमग्रेऽपि । ह्रीं नम इत्येतत्संपुटितं मध्यमचरित्रस्य प्रतिश्लोकं पाठे ॐ क्लीं नम इत्येतत्संपुटितेंऽत्यचरित्रस्य पाठे च । शीघ्रं कार्यसिद्धिः । तत्र प्रथमचरिते सौः बीजेन षडंगन्यासः । त्रिगुणा तामसीत्यादिषड्भिः रहस्योक्तं ध्यानम् । तत्र प्रथमचरित्रस्य मार्कंडेय ऋषिः अनुष्टुप् छंदः महाकाली देवता नंदा शक्तिः सौः बीजं अग्निस्तत्त्वं इष्टसि० । मध्यमचरित्रस्य

सुमेधा ऋषिः अनुष्टुप् छंदः महालक्ष्मीर्देवता शाकंभरी शक्तिः ह्रीं बीजं वायुस्तत्त्वमिष्टसिद्ध्यर्थे०। ह्रीं बीजेन षडंगं सर्वदेवशरीरे इत्यादिसप्तभिः रहस्योक्तं ध्यानम्। उत्तमचरित्रस्य शिव ऋषिः अनुष्टुब्जगती महासरस्वती देवता भीमा शक्तिः क्लीं बीजं सूर्यस्तत्त्वं काम्यासि० । क्लीमिति षडंगं गौरीदेहात्समुद्भूता इत्यादिरहस्योक्तं ध्यानम् । ऐमिति बीजमाद्यचरितस्येत्यन्यत्र । ह्रीमिति आद्ये श्रीमिति मध्यमे क्लीमित्यंते एतान्येव क्रमेण तत्तद्देवतापूजने इत्यन्यत्र । ऐमित्यंते इत्यन्यत्र । अत्र सर्वकामनाभेदेन ध्यानभेद उक्तः । वश्ये रक्ततरं ध्यानं पौष्टिके कर्बूरमुच्चाटने धूम्रं मारणे कृष्णं संतानेच्छायां नीलोत्पलदलश्यामं रत्नाकारं ध्यानं सर्वकामदं युद्धे कल्पांताग्निसमतया ध्यानं जलभयेऽपि कृष्युक्तं ध्यानं विषादिभये पीयूषवृष्टिपूतपूर्णचंद्रसदृशम् । एकदिने संपूर्णपाठाशक्तौ " पाठोऽयं विप्रकारकः " एवं क्रमेण सप्तभिर्दिनै रेकावृत्तिः । एकैकं चरित्रमेकस्मिन्दिने इति त्रिभिर्वा केरलाः । एतेषां मूलानि कात्यायनीतंत्रे द्रष्टव्यानि । तंत्रांतरे अस्य सप्तशतीमालामंत्रस्य नारायण ऋषिर्गायत्री छंदः शुंभमर्दिनीरूपा दक्षिणामूर्तिर्देवता क्लीं बीजं सोहं शक्तिः दुर्गाप्रीत्यर्थे जपे वि० । ॐ यन्मोहो ज्ञानिनोरपि अंगुष्ठाभ्यां० । निद्रां भगवतीं विष्णोस्तर्जनीभ्यां स्वाहा । ॐ जयेति देवाश्च मुदा मध्यमाभ्यां वषट्। ॐ आजघान भुजे सव्ये अनामिकाभ्यां हुं । ॐ हते तस्मिन्महावीर्ये कनिष्ठिकाभ्यां वौषट् । ॐ नीता दिवं रिपुगणा भयमप्यपास्तं करतलकरपृष्ठाभ्यां फडित्युक्तम् । संपूर्णसप्तशतीस्तोत्रस्य मार्कंडेयो ब्रह्मविष्णुशिवात्मा सुमेधा ऋषिः अनुष्टुब्जगत्यौ छंदसी चंडिकामहाकालीमहालक्ष्मीमहासरस्वतीरूपा देवताः नंदाशाकंभरीभीमाः शक्तयः रक्ताक्षीदुर्गाभ्रामर्यो बीजानि अग्निवाय्वर्कास्तत्त्वानि इष्टार्थे विनियोगः । इति ब्रह्मोत्तरखंडनाम्नि क्वचिल्लिखितम् । अस्य स्तोत्रस्य श्लोकादि डामरतंत्रेऽप्युक्तम् । " अधुना देवि वक्ष्यामि मालामंत्रं नवार्णजम् । यस्य स्मरणमात्रेण भुक्तिं मुक्तिं लभेन्नरः ॥ ब्रह्मणा त्वेकवारेण श्लोकाः प्रोक्ताश्चतुर्दश । समाधिनाम्ना प्रोक्तास्तु श्लोकाश्चाष्टौ द्विवारतः ॥ तथा वार्द्धेन सहिता भगवानेकमेकधा । त्रिधा प्रोक्ताश्च विबुधैः सार्धं षट्त्रिंशदेव हि ॥ " सार्धं न्यूना षट्त्रिंशदित्यर्थः । " देव्या द्वादशधा सार्धैकोनषष्टिः प्रकीर्तिता । ऋषिणा सप्तविंशत्या चत्वारि च शतानि वै ॥ सार्द्धाष्टोत्तरकाण्यत्र दूतेनोक्ता द्विधा प्रिये । श्लोकास्त्रयोदशैवात्र प्रोक्ताः प्राणप्रिये मम ॥ एवं सप्तशतीसंख्याश्लोका अष्टौ च सप्ततिः । शतानि पंच देवेशि तेषां सप्तशताहुतिः॥ विष्णुमायादितो भ्रांतिरूपांते आहुतित्रयम् । चितिरूपेण देयं तु आहुतीनां त्रयं प्रिये ॥" इति । एवं होमाशक्तौ जयंतीमंत्रेणैव होम उक्तोऽन्यत्र । पूजा इति

दिक्। अथैतत्स्तोत्रस्य पाठे डामरकल्पोक्तो नवार्णसंपुटीकरणप्रयोगविधिः। तत्रादौ तदुद्धारः। "ऐं बीजमादौंदुसमानदीप्ति ह्रीं सूर्यतेजोद्युतिमद्द्वितीयम्। क्लीं मूर्त्त-वैश्वानरतुल्यरूपं तृतीयमानंत्यसुखाय चिंत्यम्॥ चां शुद्धजांबूनदकांति तुर्यं मुं पंचमं रक्ततरं प्रकल्प्यम्। डां षष्ठमुग्रार्तिहरं सलीलं यैं सप्तमं कृष्णतरं रिपुघ्नम्॥ विं पांडुरं त्वष्टममासि सिद्धं च्चें धूम्रवर्णं नवमं विशालम्। ऐं ह्रीं क्लीं चामुंडायै विच्चे" इति नवाक्षरो मंत्रः। नाभिमात्रे जले सहस्रजपात्कविताशक्तिः। अयुतजपात् राजबंधनसंकटादिभ्यो मोक्षः। "अस्मिन्नवाक्षरे मंत्रे महालक्ष्मीर्व्यवस्थिता। तस्मात्सुसिद्धिः सर्वेषां सर्वदिक्षु प्रदीपकः॥" अतोऽत्र सिद्धादिविचारो नास्तीति ज्ञापितम्। "नवाक्षरस्य ऋषयो ब्रह्मविष्णुमहेश्वराः। छंदांस्युक्तानि मुनिभिर्गायत्र्युष्णिगनुष्टुभः॥ देव्यः प्रोक्ता महापूर्वाः काली लक्ष्मीः सरस्वती। नंदाशाकंभरीभीमाः शक्तयश्च मुनिस्मृताः॥ स्याद्रक्तदंतिकादुर्गाभ्रामर्यो बीजसंचयः। अग्निर्वायुर्भगस्तत्त्वं फलं वेदत्रयोद्भवम्॥" भगः सूर्यः। "सर्वाभीष्टसिद्ध्यर्थं च विनियोग उदाहृतः। ऋषिच्छंदौ दैवतानि शिरो मुखं हृदि न्यसेत्॥ शक्तिबीजानि स्तनयोस्तत्त्वानि हृदये पुनः। मंत्राणां पल्लवो वासो मंत्राणां प्रणवः शिरः॥ शिरः पल्लवसंयुक्तो मंत्रः कामदुघो भवेत्। नमोऽतः शांतिके पुष्टौ प्रणिपाते च कीर्तितः॥ वत्साकर्षणहोमेषु स्वाहांतः सिद्धिदायकः। यंत्रभंजनकार्येषु सुघोरभयनाशने॥ वषडंतः प्रकल्प्यस्तु ग्रहबाधाविनाशकः। उच्चाटने तु संप्राप्ते मंत्रः फट्पल्लवान्वितः॥" एते पल्लववासस्तत्तत्कर्मणि चंडीपाठेऽपि श्लोकांतादौ योज्याः। तथा "न्यासहीनो भवेन्मूको मृतः स्याच्छिरसा विना। अपल्लवस्तु नग्नः स्यात्सुप्तः स्यादासनं विना॥ गुरुं विना वृथा मंत्रः अव्यजापस्तु शून्यकः। निर्वर्भ्यो दुष्टदत्तः स्यादन्यबीजस्तु कीलितः॥" दुष्टदत्तः दुष्टापदत्त इत्यर्थः। "देवच्छंदर्षिहीनो यः समः प्रोक्तो भुजंगमः।" मूकादयो मंत्रा वर्ज्याः। वैदिके मंत्रे पल्लवादिविचारः। ह्रीं चंडिकायै इत्यनेनास्य मंत्रस्य च षडंगन्यासो नवबीजात्मकसमस्तमंत्रेण च षडंगम्। हृदयाय नमः शिरसे स्वाहा शिखायै वषट् कवचाय हुम् नेत्रत्रयाय वौषट् अस्त्राय फडिति क्रमः। अस्त्रं सर्वदिक्षु बोध्यम्। नव बीजमंत्रास्ते चंडिका तृप्यतामिति मंत्रेण तर्पणम्। एवं होमादिष्वप्यूह्यम्। लिखेदष्टदलं पद्मं कुंकुमागुरुचन्दनैः। पद्ममध्ये लिखेच्चक्रं षट्कोणं चंडिकामयम्॥ षट्कोणचक्रमध्यस्थमाद्यं बीजत्रयं न्यसेत्।" तत्र मध्यबीजे महालक्ष्मीः तद्दक्षिणे महाकाली वामे सरस्वती। "पूर्वादिषट्कोणेषु बीजान्यन्यानि विन्यसेत्।" इदं पूजायंत्रम्। पद्मासनाद्यन्यतममासनम्। तथा सप्तशतीश्लोकैर्न्यासः।

खड्गिनी शूलिनीत्यादि पठित्वा श्लोकपंचकमाद्यकृष्णतरं बीजं ध्यात्वा सर्वांगके न्यसेत् । आद्यमैमिति शूलेन पाहि नो देवीत्यादिश्लोकचतुष्टयं पठित्वा सूर्यसदृशं द्वितीयं सर्वतो न्यसेत् । द्वितीयं ह्रीमिति सर्वस्वरूपइत्यादिश्लोकानां पंचकं पुनः पठित्वा स्फटिकाभासं तृतीयं स्वतनौ न्यसेत् । तृतीयं क्लीमिति उक्तैरेव श्लोकैरावृत्तिद्वयेन षडंगन्यासोऽपि कचिदुक्तः । " ततः षडंगं कुर्वीत विभक्तैर्मूलवर्णकैः । एकेनैकेन वर्णेन चतुर्भिर्युगुलेन च ॥ समस्तेन च मंत्रेण कुर्यादंगानि षट् सुधीः । " ततः कचिदेवं न्यासविधिं कृत्वा सृष्टिमुद्रां विलोकयेत् । " अर्घ्यपात्रं प्रतिष्ठाप्य पूरयेच्छुभवारिणा । गंधपुष्पाक्षतांस्तत्र विन्यस्य नृपनंदन ॥ ध्यात्वा मनसि सर्वार्थान्हस्तौ दत्त्वाभिमंत्रयेत् । रक्षार्थं तस्य कर्तव्या चक्रमुद्रास्त्रसंयुता ॥ अर्घोदकेन संस्कारं पूजाद्रव्यस्य पूर्ववत् । " अथ महाकाल्यादिदेवतात्रयध्यानम् । " खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुशुंडीशिरःपाशान् संदधतीं करैस्त्रिनयनां सर्वांगभूषावृताम् ॥ नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकां यामस्तौच्छयिते हरौ कमलजो हंतुं मधुं कैटभम् ॥१॥ अक्षस्रक्परशू गदेषुकुलिशं पद्मं धनुष्कुंडिकां दंडं शक्तिमसिं च चर्म जलजं घंटां सुराभाजनम् । शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ २ ॥ घंटाशूलहलानि शंखमुसले चक्रं धनुः सायकं हस्ताब्जैर्दधतीं घनांतविलसच्छीतांशुतुल्यप्रभाम् ॥ गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महापूर्वामत्र सरस्वतीमनुभजेच्छुंभादिदैत्यार्दिनीम् ॥ ३ ॥ " ततः उक्तयंत्रे पंचोपचारैः पूज्याः । " एवं कृत्वा जपेल्लक्षचतुष्कं तद्दशांशतः । पायसान्नेन जुहुयात्पूजिते हेमरेतसि ॥ " एतदेवास्य पुरश्चरणम् । " मार्कंडेयपुराणोक्तं नित्यं चंडीस्तवं पठेत् । पुटितं मूलमंत्रस्य जपेदाप्नोति वांछितम् ॥ शतमादौ शतं चांते जपेन्मंत्रं नवार्णकम् । चंडीसप्तशतीमध्ये संपुटोऽयमुदाहृतः ॥ सकामैः संपुटो जाप्यो निष्कामैः संपुटं कचित् । सप्तशत्याश्चरित्रे तु प्रथमः पद्मभूर्मुनिः ॥ छंदो गायत्रमुदितं महाकाली तु देवता । वाग्बीजं पावकस्तत्त्वं धर्मार्थे विनियोजनम् ॥ मध्यमे तु चरित्रेऽत्र मुनिर्विष्णुरुदाहृतः । उष्णिक् छंदो महालक्ष्मीर्देवता बीजमद्रिजा ॥ वायुस्तत्त्वं धनप्राप्त्यै विनियोग उदाहृतः। उत्तरस्य चरित्रस्य ऋषिः शंकर ईरितः ॥ त्रिष्टुप् छंदो देवतास्य महापूर्वा सरस्वती । कामो बीजं रविस्तत्त्वं कामाप्त्यै विनियोजनम् ॥ " कचित्तु संपूर्णस्तोत्रस्य मार्कंडेय ऋषिः ब्रह्मविष्णुरुद्रा वा ऋषयः । महाकाल्यादयस्तिस्रो देवताः । गायत्र्युष्णिगनुष्टुप् छंदांसि । ऐं ह्रीं क्लीं बीजानि । चामुंडा शक्तिः । अग्निवायुसूर्यास्तत्त्वानि । सर्वेष्टसिद्ध्यर्थं जपे विनियोग इत्युक्तम् । " एवं संस्मृत्य ऋष्यादीन्

ध्यात्वा शर्वोक्तमार्गतः। सार्थं स्मृत्वा पठेच्चंडीस्तवं स्पष्टपदाक्षरम् ॥ समाप्तौ तु महालक्ष्मीं देवीं ध्यात्वा षडंगकम् । जपेदष्टशतं मूलं देवतायै निवेदयेत् ॥" आदावंते अष्टशतं जपः । " आश्विनस्य सिते पक्षे आरभ्याग्नितिथिं सुधीः । अष्टम्यंतं जपेल्लक्षं दशांशं होममाचरेत् ॥ " इति ॥ अथ शतचंडीविधिः ॥ " शंकरस्य भवान्या वा प्रासादनिकटे शुभम् । मंडपं द्वारवेद्याढ्यं कुर्यात्सध्वजतोरणम् ॥ तत्र कुंडं प्रकुर्वीत प्रतीच्यां मध्यतोऽपि वा । स्नात्वा नित्यक्रियां कृत्वा वृणुयाद्दश वाडवान् ॥ जितेंद्रियान्सदाचारान् कुलीनान् सत्यवादिनः। " वाडवा ब्राह्मणाः । "पंचभिः सप्तभिर्वापि नवैकादशभिस्तथा । अदीर्घदिवसैः क्षिप्रं विदध्याच्चंडिकामखम् ॥ अयुग्मब्राह्मणैः कार्यं शतावृत्तं सुसिद्धये । त्रिपंचसप्तनवभिर्दिनैः पक्षेण वा पुनः ॥ देवीमाहात्म्यपाठं तु युग्मैर्विप्रैः कृतं तु यत् । निष्फलं च भवेत्सर्वभूतिनाशमवाप्नुयात् ॥ " इति वचनत्रयं क्रोडतंत्रनाम्ना पठ्यते तत्तु निर्मूलम् । अष्टमीनवमीचतुर्दशीपूर्णिमासु यथा शतावृत्तिसमाप्तिर्भवति तथा आरंभः कर्त्तव्यः । इति सांप्रदायिकाः। " व्युत्पन्नांश्चंडिकापाठरतान् लज्जादयावतः । मधुपर्कविधानेन स्वर्णवस्त्रादिदानतः ॥ जपार्थमासनं मालां दद्यात्तेभ्योऽपि भोजनम् । ते हविष्यान्नमश्नंतो मंत्रार्थगतमानसाः ॥ भूमौ शयानाः प्रत्येकं जपेयुश्चंडिकास्तवम् । मार्कंडेयपुराणोक्तं दशकृत्वः सचेतसः ॥ नवार्णं चंडिकामंत्रं जपेयुश्चायुतं पृथक् । " संपुटीकरणजपादिति शेषः । प्रत्येकं ब्राह्मणैः अयुतजपः कार्यः । पूजयेच्च कन्यानां दशकं शुभम् । " द्विवर्षाद्या दशाब्दांताः कुमारीः परिपूजयेत् । एकाब्दायाः प्रीत्यभावे रुद्राब्दा तु विवर्जिता ॥ "तासां क्रमेण नामानि । कुमारी १ त्रिमूर्तिः २ कल्याणी ३ रोहिणी ४ कालिका ५ चंडिका ६ शांभवी ७ दुर्गा ८ सुभद्रा ९ एतैरेव नाममंत्रैस्तासां पूजा । तत्र हीनाधिकांगीव्रणयुक्तांधाकाणाकुरूपाकेकरारोमयुग्देहादासीजारोगिण्यः इत्येवमाद्या वर्ज्याः । " विप्रां सर्वेष्टसंसिद्ध्यै यशसे क्षत्रियोद्भवाम् । वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत् ॥ " इति । गंधपुष्पधूपदीपभक्ष्यभोज्यैर्यथाशक्ति वस्त्राभरणैश्च पूजिता । " वेद्यां विरचिते रम्ये सर्वतोभद्रमंडले । घटं संस्थाप्य विधिवत्तत्रावाह्यार्चयेच्छिवाम् ॥ तदग्रे कन्यकाश्चापि पूजयेद्ब्राह्मणानपि । उपचारैस्तु विविधैर्नवार्णावरणैरपि ॥ " ततः । " ॐकारः प्रथमं पीठं पूर्णपीठमतः परम् । तृतीयं कामपीठं च पूजयेत्संप्रदायतः॥ आग्नेय्यादिचतुर्दिक्षु पूज्यं देवीचतुष्टयम् । जया च विजया चैव जयंती चापराजिता ॥" पूर्वोक्तयंत्रे पूर्वकोणे सरस्वतीब्रह्मा । श्रीसहितो विष्णुर्नैर्ऋत्ये । उमया शिवो वायव्ये । षट्कोणचक्रमध्यबीजे महालक्ष्मीः । महाकाली महासरस्वती तद्दक्षिणवामयोः । उदर्क्सहो

दक्षिणे महिषः । षट्कोणेषु नंदजारक्तदंतिकाशाकंभरीदुर्गाभीमाभ्रामर्यः । सबिंदुनामाद्यवर्णाद्यास्ताराद्याश्चासां नाममंत्राः पूजादौ । तारः प्रणवः अष्टपत्रेषु ब्रह्माणी माहेश्वरी वैष्णवी वाराही नारसिंही ऐंद्री चामुंडा उक्तरीत्या नाममंत्रैः पूज्याः । ततो विष्णुमायादिचित्यंतास्त्रयोविंशतिदेवताः प्रागादिक्रमेण केसरेषु पूज्याः । ततो विष्णुमायाद्याः। क्वचित्तु एवम् । विष्णुमाया १ चेतना २ बुद्धिः ३ निद्रा ४ क्षुधा ५ छाया ६ शक्तिः ७ तृष्णा ८ क्षांतिः ९ जातिः १० लज्जा ११ शांतिः १२ श्रद्धा १३ कांतिः १४ लक्ष्मीः १५ धृतिः १६ वृत्तिः १७ स्मृतिः १८ दया १९ तुष्टिः २० पुष्टिः २१ माता २२ भ्रांतिः २३ तद्रूपास्त्रयोविंशोक्ताः। " तालमूले च संपूज्यमाधारादिचतुष्टयम् । आधाराः कूर्मशेषौ च चतुर्थी पृथिवी नृप ॥" गृहकोणेषु गणेशः क्षेत्रपालो बटुको योगिन्यः इंद्राद्याश्चेति । "एवं चतुर्दिनं कृत्वा पंचमे होममाचरेत् । " तत्र प्रथमेऽह्नि एकावृत्तिः द्वितीये द्वे तृतीये तिस्रः चतुर्थे चतस्रः। प्रतिब्राह्मणं होमद्रव्याणि । " पायसान्नैस्त्रिमध्वक्तैर्द्राक्षारंभाफलादिभिः । मातुलिंगैरिक्षुखंडैर्नारिकेलैः पुरःस्थितैः ॥ जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिः । " इति । " सप्तशत्या दशावृत्त्या प्रतिमंत्रं हुतं चरेत् । अयुतं च नवार्णेन स्थापितेऽग्नौ विधानतः ॥ कृत्वावरणदेवानां होमं तन्नाममंत्रतः । कृत्वा पूर्णाहुतिं सम्यग्देवताग्नी विसृज्य च ॥ अभिषिंचेच्च यष्टारं विप्रौघः कलशोदकैः । निष्कं सुवर्णमथवा प्रत्येकं दक्षिणां दिशेत् ॥ भोजयेच्च शतं विप्रान् भक्ष्यभोज्यैः पृथग्विधैः। तेभ्योऽपि दक्षिणां दत्त्वा गृह्णीयादाशिषस्ततः॥ एवं कृते जगद्वश्यं सर्वे नश्यंत्युपद्रवाः । " इति । " कुर्यादेवं विशुद्धात्मा चंडीसाहस्रके विधिम् । विद्यावतः सदाचारान् ब्राह्मणान् वृणुयाच्छतम् ॥ प्रत्येकं चंडिकापाठान् विदध्युस्ते दिशामतात् । अयुतं प्रजपेयुस्ते प्रत्येकं नववर्णकम् ॥ पूर्वोक्ताः कन्यकाः पूज्याः पूर्वमंत्रैः शतं शुभाः । वेदाहमेवं संपाद्य होमं कुर्युः प्रयत्नतः॥ सप्तशत्या शतावृत्त्या प्रतिमंत्रं विधानतः । लक्षसंख्यं नवार्णेन पूर्वोक्तैर्द्रव्यसंचयैः ॥ होतृभ्यो दक्षिणां दत्त्वा पूर्वोक्तान् भोजयेद्द्विजान् । सहस्रसंमितान्साधून् देव्याराधनतत्परान् ॥ एवं सहस्रसंख्याके कृते चंडीविधौ नृणाम् । सिध्यत्यभीप्सितं सर्वं दुःखौघश्च विनश्यति ॥ मारीदुर्भिक्षरोगाद्या नश्यंति व्यसनोच्चयाः । एतद्दशगुणो विधिरयुतं प्रजपेयुस्ते" इति । "यस्याः प्रभावमतुलं श्लोकमुक्त्वा कृतांजलिः । दद्याद्गोमिथुनान्यष्टावाचार्याय सुभक्तिमान् ॥ चतुर्विंशतिसंख्याकैर्हेमगद्याणकैः सह । एकैकं दश विप्रेभ्यो दद्याद्गोमिथुनं समम् ॥ निष्कत्रयसमायुक्तं वस्त्रालंकारभूषितम् । " इति । " यद्यत्कार्यं समुद्दिश्य क्रियते शतचंडिका । तत्तत्तस्य महालक्ष्मीः सत्यमाशु प्रयच्छति ॥ " क्वचिद्रुद्रयामले

इत्युक्त्वा द्रव्यांतराण्यपि होमे उक्तानि । " तत्र प्रधानहोमः स्यात्रिमधूद्रुत उत्तमः । प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलास्तथा ॥ यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैस्तथा । किंशुकैः सर्षपत्वग्भिर्दर्भैर्दूर्वांकुरैस्तथा ॥ करवीरै रक्तपुष्पै रक्तोत्पलसितैरपि । रक्तचंदनखंडैश्च गुग्गुलैश्च मनोहरैः॥" इति । अथ ब्रह्मांडपुराणनाम्ना प्रत्यध्यायं श्लोकसंख्या क्वचिदुक्ता । " तत्राद्यचरिताध्याये श्लोकैकाशीतिरुत्तमा । अथ मध्यमचरित्रे तु अष्टस्वेकसुसंख्यकाः ॥ " त्रयो मध्यमायाश्चतुः सप्तचतुर्वेदखवेदकाः । अथोत्तमचरित्रे तु षट्षडग्निश्लोकभागितेति । " अग्नीषोमाध्यायवती गीता सप्तशती स्मृता । " तथा कवचार्गलाकीलकानामपि श्लोकसंख्या उक्ताः । " श्रीवज्रकवचस्यापि त्रिपंचाशच्छ्लोकशालिता । अर्गलाकीलके श्लोका द्व्यष्टाविंशतिसंख्यकाः ॥ " अथो रहस्यत्रयस्य त्रयोध्यायामनुध्रुवा इति च तत्र कवचस्य चामुंडा देवता ब्रह्मा ऋषिः अनुष्टुप् छंदः अंगन्यस्ता देव्यः सायुधा मातरो बीजं दिग्बंधदेवतास्तत्त्वम् । अर्गलायाः विष्णुरनुष्टुप् छंदः नवार्णो मन्त्रः शक्तिः मन्त्रोदिता देव्यो बीजं सप्तशतीमंत्रस्तत्त्वम् । कवचस्य शिव ऋषिः इतरदर्गलावत् । तथा प्रथमचरित्रस्य ब्रह्मा ऋषिः अनुष्टुप् छंदः महाकाली देवता नंदजा शक्तिः रक्तदंतिका बीजमग्निस्तत्त्वं पौष्टिके विनियोगः । मध्यमचरित्रस्य विष्णुर्ऋषिः महालक्ष्मीर्देवता शाकंभरी शक्तिः दुर्गा बीजमुष्णिक् छन्दः वायुस्तत्त्वमीप्सितप्राप्त्यर्थे जपे विनियोगः । उत्तरचरित्रस्य शिव ऋषिः महासरस्वती देवता छन्दोऽनुष्टुब्जगत्यौ भीमा शक्तिः भ्रामरी बीजं सूर्यस्तत्त्वमुच्चाटनादौ विशेषतो विनियोग इति । तत्तु कात्यायनीतंत्रोक्तमंत्रविभागेन विरोधात् । निर्मूल इति ध्येयम् । इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते मार्कंडेयपुराणांतर्गतसप्तशत्याख्यचंडीस्तोत्रस्य व्याख्याने चंडीस्तोत्रप्रयोगविधिः ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यर्पणं भूयात् ॥

---

श्रीगणेशाय नमः ॥ श्रीदुर्गादेव्यै नमः ॥ बंधूकबंधूभवदाननाया भासैव दासीकृतशोणसिन्धोः ॥ सानंदवृंदारकवंदितांघ्रेर्भासः शिवाया वयमेव दासाः ॥ १ ॥ तिष्ये शिष्यैश्चतुर्भिर्योऽमुष्य लोकस्य शांतये ॥ अवाततार तारात्मा तं वंदे शंकरं गुरुम् ॥ २ ॥ श्रीलक्ष्मीं मातरं रंगनाथाख्यं पितरं गुरुम् ॥ काशीनाथश्रीधराख्यौ गुरून्नत्वा यथामति ॥ ३ ॥ शैवोपनामकेनैव नीलकंठेन केनचित् ॥ सप्तशत्यंगषट्कस्य व्याख्यानं तन्यते मुदा ॥ ४ ॥ तत्र तावद्भगवत्युपासनायां केचिद्भ्रांता वदंति । मायारूपाया भगवत्या उपासना शास्त्रेषूक्ता तथा मायाया मिथ्यात्वान्मुक्तौ तस्या अनन्वयाच्चाश्रद्धेयेयमुपासनेति । ननु नेयं भ्रांतिः । तापनीये । " माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान्मायामेतां शक्तिं विद्याद्य एतां मायाशक्तिं वेद स मृत्युं जयति स पाप्मानं तरति सोऽमृतत्वं च गच्छति महतीं श्रियमश्नुते " इति । श्रुतौ " मायाशक्तिं वेदोपास्ते स मृत्युं जयति " इति कथनेन । तथा " त्वं वैष्णवी शक्तिरनंतवीर्या विश्वस्य बीजं परमासि माया । संमोहितं देवि समस्तमेतत् " इत्यादिस्मृतिभिः विष्णोः शक्तेर्जडाया मायाया एवोपास्यत्वकीर्तनादिति चेन्न। देव्यथर्वशिरसि ।" सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवि साब्रवीदहं ब्रह्मरूपिणी मत्तः प्रकृतिपुरुषात्मकं जगत् " इति । तथा भुवनेश्वर्युपनिषदि । " अथातोऽबोपनिषदं व्याख्यास्यामोऽथ ह्येनां ब्रह्मरंध्रे ब्रह्मस्वरूपिणीमाप्नोति" इति । तथा "भुवनाधीश्वरी तुर्यातीता विश्वविमोहिनी" इति । तथा भावनोपनिषदि । "स्वात्मैव ललिता" इति श्रुतिभिः तथा त्रिपुरातापनीयसुंदरीतापनीयादिषु " परो रजसे सावदोम् " इति गायत्रीचतुर्थचरणप्रतिपाद्यब्रह्मवाचकत्वेन ह्रींकारबीजस्य कथने ह्रींकारमन्त्रस्य ब्रह्मदेवतात्वप्रतिपादकश्रुत्या च तथा कालीतारोपनिषदादिश्रुतिभिस्तथा स्मृतिभिश्च ब्रह्मरूपिण्या भगवत्या एवोपासनाकथनात् । तथा हि स्मृतयः । सूतसंहितायां पंचमाध्याये । " अतः संसारनाशाय साक्षिणीमात्मरूपिणीम् । आराधयेत्परां शक्तिं प्रपंचोल्लासवर्जिताम् ॥ " इति । स्कांदे वेदारण्येश्वरमाहात्म्ये । " परा तु सच्चिदानंदरूपिणी जगदंबिका । सैवाधिष्ठानरूपा स्याज्जगद्भ्रांतेश्चिदात्मनि ॥ " इति । कूर्मपुराणे द्वादशाध्याये । " एतत्प्रदर्शितं विप्रा देव्या माहात्म्यमुत्तमम् । सर्ववेदांतवेदेषु निश्चितं ब्रह्मवादिभिः ॥ एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् । योगिनस्तत्प्रपश्यंति महादेव्याः परं पदम् ॥ " इति । " परात्परतरं तत्त्वं शाश्वतं शिवमच्युतम् । अनंतं प्रकृतौ लीनं देव्यास्तत्परमं पदम् ॥ " इति । " शुद्धं निरंजनं शुभ्रं निर्गुणं दैन्यवर्जितम् । आत्मोपलब्धिविषयं देव्यास्तत्परमं पदम् ॥ " इति। तथा हालास्येश्वर-

माहात्म्ये मायाबीजार्थप्रस्तावे । " सत्स्वरूपः सदाकारो हकारो धर्मतत्परः । चिदाकारः शिवाकारो रेफः सर्वार्थसिद्धिदः ॥ आनंदरूपयोरैक्यादीकारः सर्वकामदः ॥ बिंदुनादौ तदंतस्थौ भवेतां मोक्षदावुभौ ॥ सच्चिदानंदरूपं तु प्रोक्तं बीजं मनीषिभिः। सच्चिदानन्दरूपं यत्पदं ब्रह्म तदेव हि॥" इति। देवीभागवते। "निर्गुणा सगुणा चेति द्विधा प्रोक्ता मनीषिभिः । सगुणा रागिभिः सेव्या निर्गुणा तु विरागिभिः ॥ " इति । ब्रह्मांडपुराणे ललितोपाख्याने । " चितिस्तत्पदलक्ष्यार्था चिदेकरसरूपिणी । " इत्यादयोऽष्टादशपुराणेषूपपुराणेषु च स्मृतयो द्रष्टव्याः। ननु तर्हि षोडशीग्रहणाग्रहणयोः क्रियाविषयत्वात्तत्र शाखाभेदेन विकल्पसंभवेऽपि वस्तुस्वरूपस्यैकविधत्वात्तत्र विकल्पासंभवेन भगवतीस्वरूपस्य मायास्वरूपत्वप्रतिपादकस्तुत्या सह भगवत्या ब्रह्मरूपत्वप्रतिपादकश्रुतेर्विरोध इति चेन्न । मायाया वेदांतेषु मिथ्यात्वान्मिथ्यापदार्थस्याधिष्ठाने कल्पितत्वात्तस्याधिष्ठानसत्तातिरिक्तसत्ताभावान्मायायामधिष्ठानसत्ताप्रवेशान्मायास्वरूपोपासनायामपि सत्तारूपब्रह्मण एवोपासनासंभवतीत्याशयेन मायास्वरूपत्वप्रतिपादनेऽपि विरोधाभावात् । यथा ब्रह्मण उपासनायामपि न केवलं ब्रह्मणो ग्रहणं किंतु शक्तिविशिष्टस्यैव शक्तेस्तदतिरेकेणाभावात् । केवलस्योपासनासंभवाच्च । तथा मायोपासनायामपि न केवलं मायाया अवस्थानमस्ति। येन केवलाया उपासनं संभवेत् । किंतु ब्रह्माधिष्ठानयुताया एवावस्थानमिति भगवत्या मायारूपत्वप्रतिपादनेऽपि फलतो ब्रह्मस्वरूपमेव भगवत्या सिध्यतीति श्रुत्योः परस्परं विरोधाभावात् । तदुक्तम् । " पावकस्योष्णतेवेयमुष्णांशोरिव दीधितिः । चंद्रस्य चंद्रिकेवेयं शिवस्य सहजा ध्रुवा ॥ " इति । तथा " स्वपदा स्वशिरश्छायां यद्वल्लंघितुमीहते । पादोद्देशे शिरो न स्यात्तथेयं वैंदवी कला ॥ " इति । तथा च यथाग्नौ होमेऽग्निशक्तौ होमोऽर्थसिद्ध एवमग्निशक्तौ होमेऽप्यग्नौ होमोऽर्थसिद्धस्तद्वन्मायाया भगवतीत्वेऽपि ब्रह्मण एव भगवतीत्वं सिद्धमिति तस्यैवोपासनायां ग्रहणं मायाया मिथ्यात्वप्रतिपादकवाक्येषु तु ब्रह्मणो मिथ्यात्वाभावात्केवलमायाया एव ग्रहणं तस्या मिथ्यात्वे तदधिष्ठानस्य सत्यत्वादुपासकस्योपास्यमायापदार्थांतर्गतब्रह्मांशस्य मोक्षदशायामनुस्यूतत्वान्न मुक्तावुपास्यस्वरूपत्यागः । अत एवांतर्यामिब्राह्मणे पृथिव्यादिमायांतानां पदार्थानां " यः पृथिव्यां तिष्ठन्यं पृथिवी न वेद । यस्य पृथिवी शरीरम् । यः पृथिवीमंतरो यमयति " इत्यादिनांतर्यामिचेतनसंबंधेनैव देवतात्वमुपवर्णितम् । तथा च " सर्वं खल्विदं ब्रह्म " इति श्रुतिरपि अनुगृहीता भवति तत्तदेतत्सर्वमभिप्रेत्य सूतसंहितायामुक्तम् । " चिन्मात्राश्रयमायायाः शक्त्याकारे द्विजोत्तमाः । अनुप्रविष्टा या संविन्नि-

